**स्वस्ति।**

प्रकृतः प्रबन्धः संस्कृतवाङ्मये विश्वकोशान् तत्कल्पांश्च ग्रन्थान् परिचाययति।अल्पकायायां कृतावस्यां संक्षेपाभिरुचीनां कृतेऽल्प एव स्थले विषयपरिचायनं विहितम्।

दशवर्षाणि (१९०९)मन्त्रालयस्थराघवेन्द्रमठतः प्रकटितपूर्वस्यास्य प्रबन्धस्य। द्वित्रेषु स्थलेषु प्रापितगुणाधानदोषापनयनरूपसंस्कारस्य त्याजित टोडरानन्दविषयस्य योजितनारदपुरणार्थशास्त्र-नाट्यशास्त्र-युक्तिकल्पतरु कन्नडविवेकचिन्तामण्यनुवाद-कन्नडसौगन्धिकापरिणयानुवाद-संस्कृतविकिपीडिया-विषयस्य चैतस्य द्वितीयेयं मुद्रणा।

पूर्वमुद्रितानामनेकेषां दुर्लभानां ग्रन्थानां स्क्यान्ड्-आकृतीर्विरचय्य तद्रक्षणं कुर्वन् सांस्कृत्या जगत्याः कृतज्ञतायाश्च पात्रं विद्वान् शङ्करः मदीयमिमं लघुं प्रबन्धं यथापूर्वं Sanskrt e booksइत्यत्र प्रकाशयति। स एव वेङ्कट रङ्गाचार्य इति लिखितव्ये प्रमादात् वेङ्कटाचार्य इति सदोषं लेखनं मह्यं ज्ञापितवान्। स ममास्त्यादरभाजनम्।

अधिसंस्कृतविश्वकोशविषयमधिकतरं जिज्ञासवो लोकाः सांशोधने पथि स्वयं पथिकीभूयातिरिक्तान् विचारान् ज्ञायासुः।

**एतानि वाक्यानि मैसूरवीयस्य एस्.जगन्नाथस्य**

jgrantha@gmail.com
April 2019

**लघुशब्दार्थसर्वस्वनामानं**

**परमाद्भुतं विश्वकोशं**

**रचितवते धन्यजन्मने**

**परवस्तुवेङ्कटरङ्गाचार्याय**

सादरं समर्प्यते प्रबन्धोऽयं

प्रबन्ध्रा जगन्नाथेन।

# विषयानुक्रमणिका

# संस्कृतवाङ्मये विश्वकोशाः

"विश्वम्" इति प्रसिद्धस्य शब्दस्य न केवलं जगती अर्थः किं तर्हि 'समस्तम्', 'सकलम्' इत्यप्यर्थः समस्तीति न तिरोहितं प्रेक्षावताम्। "विश्वेदेवता" इत्यस्मिन् किल शब्देऽर्थोऽयं कामं प्रतिष्ठितः। एतेन केनापि न भ्रमितव्यं विविधविषयसंकलनपूर्वकं ग्रन्थरचनायाः प्रवृत्तिः संस्कृतविद्वल्लोके नासीदिति। इत्थंभूतलक्षणलक्षिता ग्रन्था अनल्पयैव मात्रया कामं गोचराः सांस्कृतेऽपि जगति। परन्तु विश्वकोश नाम्ना तादृशग्रन्थानामभिधानं नास्ति स्म रूढमूलम्। यद्यपि क्रैस्तवीये सप्तदशे शके नसालतिनामकमुस्लिंराजपोषितेन काश्मीरदेशजेन विश्वेशाख्येन विरचिते "असालतिप्रकाशे" कश्चन 'विश्वकोशः' परामृष्टः परन्तु स केनापि रचितः शब्दकोश एव[१]। राजमानसोल्लासं कर्ता सोमेश्वरस्तु स्वां कृतिं (राज)मानसोल्लासं "जगदाचार्यपुस्तकम्" इति विशेषणेन विशेषयति। अभिधानेनानेनैव "विश्वस्मिन् वसतां बुद्धिजीविनां परामर्श्यो ग्रन्थः कश्चन रिरचयिषित" इति तदीयमाकूतमिति स्पष्ट भूयिष्ठम्। Encyclopaedia इत्यस्मिन्नर्थे विश्वकोश इति शब्दस्य प्रयोगः सर्वथा नवीनः। केनायं शब्द ऐदंप्राथम्येनेदमर्थे सृष्ट इति प्रश्नस्योत्तरम् अस्मद्ज्ञानबहिर्भूतम्।

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

१.*Indian lexicography* by Claus Vogel P.364(A History of Indian literature Vol.5 Part II ed.by John Gonda)Otto Harrassowitz Wiesbaden 1989
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

वाङ्मयस्य विस्तरः कथञ्चित् संपुञ्जनीय एकत्रेति कामना बुद्धिजीविनां प्रायिकी।नात्र वैचित्र्यलेशो विस्मयकणिका वा। प्रवृत्ति-रेवंभूता चीना-ग्रीक्-प्रभृतिराष्ट्रेष्वप्यासीत्, भारतेऽपि स्म वर्तते।एवं विधया भावनया चोदितानां ग्रन्थकाराणां प्रयत्नवशतः सृष्टान् संस्कृत-ग्रन्थान् संक्षेपेण परिचाययति लेखोऽयमास्माकः।नात्र सविवरणम् अनुसंन्धानं चिकीर्षितम्।केवलं प्राधीतानां कौतुकमुत्पादयितुं कृतमिदं यतनम्।

पुराणानि वहन्ते प्राधान्यं विषयेऽस्मिन्नित्यत्र न द्वापरः। प्राथमिकेन कृतेन दृष्टिनिपातेन केषांचन पुराणानामस्तव्यस्ततेव दृश्यते। परन्तु नेदं तेषां विराड्रूपं तिरोदधाति।

विमृशतामाधुनिकानाम् ऐतिहासिकानामभिप्रायस्यानुसारेण पुराणसंज्ञया प्रथितानां सर्वासां कृतीनां पुराणत्वरूपो धर्मो न सिद्ध्यति, तत्र परामृष्टानां समुच्चितानां च केषाञ्चन वस्तूनां नावीन्यस्य दुरपह्नवत्वात्।परन्तु पुराणानां रचनाकालो न सुस्पष्टस्तस्मात् कारणादत्र प्रथमं विचार्याः पुराणाख्याः कृतयस्ता एव।

## १.अग्निपुराणम्

अग्निपुराणं संस्कृतविश्वकोशेषु भजते प्रधानं स्थानम्।स्वयं पुराणमिदं स्वस्मिन् अग्निपुराणे सर्वासां विद्यानां स्थानमस्तीति विस्फुटं ब्रूते।उपलभ्यमानमग्निपुराणं मूलभूतं नास्तीति, तान्त्रिकैर्बहवो

विषया अत्र प्रक्षिप्ता इति च दानसागरं कर्तुर्बल्लालसेनस्य मतम्[१]। तत्रभवान् डा.आर्.सि.हाज्रा वह्निपुराणनाम्ना मूलमधुनापि रायल् एष्याटिक् सोसैटि संस्थायामुपलब्धं संशोधितवान्।

एते प्रक्षिप्ता भागाः प्रायशः क्रैस्तवीयाद् दशमशतकात् पूर्वमेव योजिताः स्युः।एकत्र बहूनां विषयाणां योजनेन विश्वकोशाकार संपादनं यद्यप्यस्य मूलत्वरूपं धर्मं नाशयतीत्यत्र न विवादस्तथापि एकस्मिन्नेव ग्रन्थे समाविष्टा नानाविषयास्तत्रापि प्राचीन एव काले संगृहीताः संशोधनाय पर्याप्तां सामग्रीं ददतीत्यत्र न कापि संशीतिः।

इयं हि सर्वेषां पुराणानां प्रस्तुतिभङ्गी यत् सर्वमपि विषयजातं द्वयोः संभाषणैः स्फोर्यते, एकस्यर्षेः पर्यनुयोगम् अन्य उत्तरयतीति

१.तार्क्ष्यं पुराणमपरं ब्राह्ममाग्नेयमेव च ।त्रयोविंशतिसाहस्रं पुराणमपि वैष्णवम्।षट्साहस्रमितं लिङ्गं पुराणमपरं तथा।दीक्षाप्रतीक्षापाषण्डमुक्तिरत्न-परीक्षणैः।मृषावंशानुचरितैः कोशव्याकरणादिभिः।असङ्गतकथाबन्धपरस्पर-विरोधितैः।तन्मीनकेतनादीनां भण्डपाषण्डलिङ्गिनाम्।लोकवञ्चनमालोक्य सर्वमेवावधीरितम्।(एते श्लोका बल्लालसेनीया तत्रभवता हाज्राकेनोद्धृताः।)

It is wellknown that present *Agnipurāṇa* which has been printed repeatedly in different parts of India is a spurious work written about the ninth century AD. Vallālasena said that this *purāṇa* (as well as a few named by him) was compiled by the Tāntriks with a sectarian motive and was consequently rejected by him as apocryphal.

*Discovery of genuine Āgneyapurāṇa.* Dr.R.C. Hazra . Journal of the Oriental Research Institute M.S. University of Baroda,Baroda.V.3.March 1956 Page 411

च। पुराणमिदमग्निनामकमपि संभाषणैरेव संघटितम्। तानि च संभाषणान्यग्निवसिष्ठयोः। पुराणमिति शब्दाकर्णनमनु सृष्टिः प्रतिसृष्टिरित्यादिवस्तुपूगं किलानुसन्दधति विमर्शनविचक्षणाः। अत्रापि सर्गस्य (सृष्टेः)विचारः १७-२० एतेष्वध्यायेषु वर्तते, प्रतिसर्गस्य तु पुनः ३३८संख्याङ्कितस्याध्यायस्याननन्तरम्। वंशो नाम राजीयानामथवा ऋषीयाणां नाम्नां पट्टिका।

मन्वन्तरं नाम शासनपरिपाट्यां मनूनां कालिकं क्रमिकं च परिवर्तनम्। राजर्षीणां चरित्राण्येव वंशानुचरितपदाभिलप्यानि। कल्प मन्वन्तरवर्णनम् अग्निपुराणे बहुषु स्थलेष्वक्षिलक्षीक्रियते। विशेषतः १५० संख्याङ्कितेऽध्याये चतुर्दशमन्वन्तराणां वर्णनं वर्तते। वंशानुचरितं तु भूयोभूयः समायाति।

यदि केवलमेतावदभविष्यत्, पुराणमिदं भारतीयानां श्रद्धा-विश्वासभावनानां चिन्तनपरंपरायाश्च प्राचीनं लिखितसाक्ष्यमात्रं समभविष्यत्। विश्वकोशत्वरूपेण धर्मेण महत्त्वमेतदीयम्। साहित्यशास्त्रम्, आयुर्वेदः, अश्वायुर्वेदः,गजायुर्वेदः, वृक्षायुर्वेदः, वास्तुविद्या, राजनीतिः, शस्त्रविद्या एतदादीनि वस्तूनि पर्याप्तमात्रयाऽत्र क्लृप्तस्थलावकाशानि। अधुना समग्रशः कीर्त्यन्ते विषया इमे। (अत्र दत्ताः संख्या अध्यायानाम्।)

११-१६.अवतारकथाः। १८-२०.वंशानां वर्णनं-सृष्टिः। २१-१०३.सांप्रदायिक्यः पूजाः,गृहे निर्वर्त्यानि पूजादिकानि,देवस्थाने विधेयानि कैङ्कर्याणि, विविधानां देवतामूर्तीनां परिमाणं, मूर्तिलक्षणानि, देवता प्रतिष्ठा, वास्तुपूजा, जीर्णोद्धारश्च। १०४-१४९.भुवनकोशः, (संप्रदाय

मनपहाय भूम्यादिलोकानां वर्णनं)कासाञ्चन पवित्राणां नदीनां माहात्म्यं ज्योतिश्शास्त्रविचारः, नक्षत्रनिर्णयः,युद्धे जयं प्राप्तुमुच्चारणीया मन्त्राः, चक्राणि, अनेकानि तान्त्रिकाणि विधानानि च।१५०.मन्वन्तराणि। १५१-१७४.वर्णाश्रमधर्माः, प्रायश्चित्तानि श्राद्धं च। १७५-२०८.व्रत परिभाषा, पुष्पाध्यायः (विविधानां पुष्पाणां पूजायोग्यत्वायोग्यत्वे) पुष्पेण पूजायाः फलं च। २०९-२१७.दानमाहात्म्यं, विविधानि दानानि, मन्त्रमाहात्म्यं, गायत्रीध्यानपद्धतिः, शिवस्त्रोत्रं च(एते विषयाः पुराणमिति शब्दश्रवणमनु सुज्ञेया एव)। २१८-२४२.राजकीया विचाराः-राज्ञां कर्तव्यानि।अभिषेकविधिः-युद्धक्रमाः,रणदीक्षा, स्वप्न शुकनादिविचारः, दुर्गनिर्माणविधिः दुर्गप्रभेदाश्च। २४३-२४४.पुरुषाणां स्त्रीणां च दैहिकानि लक्षणानि।२४५.चामरखड्ग-धनुषां लक्षणम्। २४६.रत्नपरीक्षा।२४७.वास्तुलक्षणम्।२४८.पुष्पादिपूजाफलम्। २४९-२५२.धनुर्वेदः।२५३-२५८.अधिकरणस्य(न्यायालयस्य)व्यवहाराः।२५३-२७८.चतुर्णां वेदानां मन्त्रप्रयोगैर्जायमानानि विविधानि फलानि, वेदशाखानां विचारः, राज्ञां वंशस्य वर्णनम्।२७९-२८१.रसायुर्वेदस्य काश्चन प्रक्रियाः।२८२-२२९.वृक्षायुर्वेदः, गजचिकित्सा,गजशान्तिः, अश्वशान्तिः(गजाश्वयोः कोऽपि रोगो न भूयादिति हेतोरनुष्ठातव्याः सांप्रदायिका आचाराः),२९८-३७२.विविधदेवताकाः मन्त्र-शान्ति-पूजाः, देवालयमाहात्म्यं च ।२९८-३७२.छन्दश्शास्त्रं वर्णोच्चारणशिक्षा च।३३७-३४७.साहित्यरसालङ्कारकाव्यदोषरीतिनृत्यानि३४८.एकाक्षरी कोशः।३४९-३५९.व्याकरणप्रतिपाद्या विविधा विषयाः।४६०-

३६७.पर्यायशब्दकोशः। ३६८-३६९.प्रलयनिरूपणम्।३७०. शारीरकम् (शरीरस्य तदवयवानां चायुर्वेदसम्मतं निरूपणम्।) ३७१. नरक निरूपणम्।३७२-३७६.योगशास्त्रप्रतिपाद्या विचाराः।३७७-३८०. वेदान्तज्ञानम्।३८१.गीतासारः।३८२.यमगीता। ३८३.अग्निपुराण माहात्म्यम्।

पूर्वोक्ते विचारवैविध्ये दृष्टे पुराणस्यास्य पौराणिका एव विषयाः प्रधानप्रतिपाद्या इति सुविस्पष्टं भवति।अत्रत्यस्य साहित्य शास्त्रीयविचारस्येतरेषामपि विषयाणां संशोधनमनेकैः कृतपूर्वम्।परन्तु धनुर्वेदादयोऽत्र ये प्रतिपादितास्तत्रैतन्न सत्यमिति प्रतिभाति। अन्यच्च- अत्रत्यः पर्यायकोशो वस्तुतोऽमरकोशस्यैव संग्रहः।संस्कृतशिक्षणस्य नवीनता सांप्रदायिकीमप्यभिरुचिम् आदध्यादिति प्रतिपादनकुतूहलिभि रमरकोशस्य संक्षिप्तामावृत्तिमेतां कुत्रापि संस्कृतपाठ्यग्रन्थे समावेशयितुं शक्यते वेति विचारणीयम्।एतेन समाविष्टेन कोषभागेन साकमेव साहित्यात् तत्प्रयोगोदाहरणानि देयानि।एवं विहिते संस्कृतशिक्षणं दृढायते,भाषादृष्ट्या संस्कृतस्य यो नाडीपरिस्पन्दः स आकर्ण्यते विद्यार्थिभिः।

## २.गरुडपुराणम्

गरुडपुराणं २६४ अध्यायैः विश्वकोशरूपं धृतवत् पुराणम्। मृते कस्मिन्नपि एतस्य पारायणं करणीयमिति पद्धतिः पौराणिकैः

कल्पिता वर्तते। अत्रत्य उत्तरखण्डे केषुचनाध्यायेषु प्रेतैर्नरकेऽनुभूयमानां पीडानां तथा यमलोकीयानां नरकानां च वर्णनं समस्तीति कारणा देतादृशी रूढिः कैश्चित् कल्पिता सती संप्रदायविशेषः समभूदिति नितरां दुःखाकरम्। यत इदम् अधिमरणमनावश्यकमातङ्कं जनयति, अत्रत्येषु वैविध्यविलासवत्सु विषयेषु दृष्टिक्षेपेण जायमानादुत्कृष्ट स्तरीयादानन्दादाश्चर्याच्च वञ्चयति पठितॄन्। न केवलमेतावदेव। पुराणे ऽस्मिन् यद् यदस्ति तत्सर्वं नरकवर्णनमात्रमेवेति भ्रान्तिमपि जनयति। एतत्पुराणनामश्रवणानुपदं जनान् भाययति च रूढिरियम्[1]। संप्रदाय स्यास्य जनयिता महानुभावो जीवनस्यानन्दानुभवं न स्म परिचिनोतीव। अस्त्वप्रासंगिकम्। कीर्तयामः पुराणस्यास्य विषयानुक्रम णिकाम्।

पूर्वखण्डे-१-६.सृष्टिविचारः। ७-४३.सूर्य-विष्णु-गणेश-हयग्रीव-गोपाल-श्रीधर-दुर्गा-माहेश्वरी-देवतानां पूजा, न्यासश्च। ४४.ब्रह्मध्यानम्। ४५-५८.सालिग्रामलक्षणं,देवताप्रतिष्ठापना, अष्टाङ्ग योगः, भुवनवर्णनं, पातालनरकादिवर्णनं च। ५९-६२.ज्यौतिषशास्त्र विचाराः। ६३-६४.स्त्रीपुरुषलक्षणानि। ६५.सामुद्रिकशास्त्रम्। ६६-६७. स्वरोदयशास्त्रम्(विशिष्टं फलितज्यौतिषम्)। ६८-८०.रत्नशास्त्रम्। ८१-

१.मया प्रकृतस्य लेखस्य रचनाप्रसंगे टिप्पणीर्लिखितुं पुराणस्यास्य दर्शने चिकीर्षिते कश्चिदार्यो भीतोऽवेपत,"अ-मरणप्रसंगे काले पुराण-मेतन्न स्प्रष्टव्यम्"इत्युपादिशच्च। "स्पृष्टे च गरुडपुराणे कस्यापि मरण-मवश्यं भावि" इत्यदसीयः श्रद्धाविशेषः। "न ह्यस्पृष्टगरुडपुराणा मरण-धर्मरहिता " इति मया प्रत्यपादीत्यन्यदेतत्।

८६.तीर्थक्षेत्राणां माहात्म्यवर्णनम्।८७.मन्वन्तरवर्णनं, पित्राख्यानं, पितृस्तोत्रं च।९१-९२.विष्णुध्यानम्।९३-१०३.वर्णाश्रमधर्मः।१०४-१०७.अनुभूतनरकाणां जीविनां गतिः प्रेताशौचं च।१०८-११५.नीति विचारः।११६-१३७.विविधानि व्रतानि।१३८-१४५.सूर्यवंशाचन्द्र वंशयोर्वर्णनं, रामायणमहाभारते च।१४६-१९३.आयुर्वेदः।१९४-२०२. विषौषधिर्मन्त्रचिकित्सा, अश्वायुर्वेदश्च। २०३-२०४.व्याकरणम्। २०५-२१७.सांप्रदायिकानि नैमित्तिकानि कर्मानुष्ठानानि, प्रलयवर्णनं, पापफलानि च।२१९-२२६.विष्णुभक्तिः स्तोत्राणि च।२२७-२२९.आत्मज्ञानं भग वद्गीतासारश्च।१३५.धर्मविचारः, यमलोकवर्णनं, प्रेतजाः पीडाः, मृत्युकारणं, श्राद्धविचारः, श्राद्धकाले दानफलं च ।

## ३.विष्णुधर्मोत्तरपुराणम्

वस्तुत इदमुपपुराणं न पुनर्महापुराणम्।त्रिभिः खण्डैस्तथा ५७० अध्यायैश्च (प्रथमे खण्डे २६९संख्याकैः, द्वितीये खण्डे १८३संख्याकैः, तृतीये खण्डे ११८ संख्याकैः )विभक्तस्य उपपुराणस्यास्याकृतिरतीव बृहती।तस्मादत्रत्या विषयाः पट्टिकाक्रमेण केवलं दीयन्ते।

पौराणिक्यः काश्चन मुख्याः कथाः, रामायणोत्तरकाण्डस्य कथा,अन्धकासुरसंहारः, आयुर्वेदः, गजायुर्वेदः, गोवैद्यं, मुख्याः काश्चन राजनीतयः,विविधापराधेषु तदनुगुणा दण्डाः, प्रायश्चित्तानि, स्नान-वैविध्यं,पापपुण्यनरकादिनिरूपणं, ऋग्वेदमन्त्रप्रयोगपूर्वकानि शान्तिक-

पौष्टिकानि कर्माणि,वर्णाश्रमधर्माः,शकुनानि, ज्यौतिषशास्त्रं, धनुर्वेदः, छन्दःशास्त्रं, सूत्रशास्त्रादिवाङ्मयविषयाः, व्याकरणम्,अभिधानकोशः, अलंकारः, नाट्यलक्षणं, नृत्यप्रभेदाः, चित्ररचनाक्रमाः, विग्रहशास्त्रं, वास्तुस्वरूपं, पाकशास्त्रं, हंसव्रतादीनि विविधानि व्रतानि।

## ४.नारदपुराणम्

नारदपुराणं पूर्वोत्तरभागयोर्विभक्तम्। १२५ अध्यायात्मके पूर्वार्धे चत्वारः पादा ये सनकसनन्दनसनत्कुमारसनातनाख्यैश्चतुर्भिर्महर्षिभि र्नारदायोपदिष्टाः।८२ अध्यायात्मकं तूत्तरार्धं मान्धातृवसिष्ठसंवादरूपम्।

अस्मिन् पुराणे पुराणप्रतिपाद्यैः सर्गप्रतिसर्गाद्यैः सह शिक्षाव्याकरणछन्दोनिरुक्तज्यौतिषाण्यपि प्रतिपाद्यानि।पशुपाशविमोक्ष-मन्त्रशोधन-दीक्षा-मन्त्रोद्धारादयो मन्त्रशास्त्रविषया अप्यत्र निरूपिताः।संसारनिवारणं, याम्या यातनाः, कर्मज्ञानभक्तयः, नास्तिकवादखण्डनं, अध्यात्मोपदेश इत्यादिकमपि वस्त्वत्र गोचरीभवति।

चतुर्ष्वपि पुराणेष्वेतेषु दृश्यमानस्य वस्तुजातस्य केवलमितरग्रन्थानां समुच्चयमात्रत्वं वीक्षितवन्तो हाज्राप्रभृतिविद्वांसस्तु रामायण-महाभारत-हरिवंश-पिङ्गलच्छन्दःसूत्र-नामलिङ्गानुशासन-युद्धजयार्णव- हस्त्यायुर्वेदप्रभृतय एवोपजीव्याः कृतय एतेषामिति ज्ञापयन्ति। तथाप्यधुना कुत्राप्यनुपलभ्यमानानां कृतीनां सार एतेषु

ग्रन्थेषु लभ्यत इति हेतोर्ग्रन्थसंपादनशास्त्रदृष्ट्या अमूल्या विश्वासयोग्याश्च प्राचीनाः पाठा अत्र लभ्यन्त इति हेतोश्चात्रत्यानां ग्रन्थभागपाठानामुत्कृष्टत्वमसन्देग्धव्यम्।

# ५.अर्थशास्त्रम्

अर्थशास्त्रं चाणक्येन कौटिल्यापरनामधेयेन मौर्यस्य चन्द्रगुप्तस्य (क्रि.पू.३२१-२९८)मन्त्रिणा रचितम्।अर्थशब्दो राजशासनसंबद्ध इत्यत्र न संशयः।राज्ञा ज्ञातव्यान् सर्वानपि विषयान् व्याप्नोतीदमर्थशास्त्रम्।तस्मादेव कारणादत्र पशुपालनं, कृषिः, लोहविषयाः, अरण्यसंबद्धा विषया इत्यादिकमन्तर्भूतम्।

अर्थशास्त्रस्य मातृका मैसूरुनगरे वर्तमाने शासकीय-मातृकालये (अधुना प्राच्यविद्यासंशोधनालये) ग्रन्थपालाय रुद्रपट्टणं श्यामशास्त्रिणे केनचन तञ्जावूरुनिवासिना दत्ता।मातृकेयं ग्रन्थलिप्या तालपत्रेषु लिखिता[1]।श्यामशास्त्रिणा ग्रन्थस्य इङ्ग्लीषनुवादः १९०५ ईसव्यां कृतः प्रकटितश्च।मूलग्रन्थस्य तु प्रकाशनं तदनन्तरमेवाभूत्।

तञ्जावूरुब्राह्मणेनार्थशास्त्रमातृका दत्तेति ज्ञानमस्माकं लूयीरैसुकेन

१.अधिश्यामशास्त्रिपण्डितं काचित् कथा प्रसिद्ध्यति यथा-

मैसूरुराजो नाल्वडिकृष्णराजः जर्मनीदेशे प्रवसन् कस्मिंश्चन विश्वविद्यानिलये परिचायित इत्थं केनापि -''अयं मैसूरुदेशस्य राजा''इति। कोऽपि जर्मन्देशीयः पण्डितो झटिति ''मैसूरुदेशो नाम किं स एव यस्मिन् कौटिल्यार्थशास्त्रसंपादकस्तत्रभवान् श्यामशास्त्री निवसति''इति। प्रतिनिवृत्तः

रचिताया इङ्ग्लीष्पीठिकायाः पठनेन जायते। अध्येतद्वस्तु श्यामशास्त्री मौनावलम्बीति यत्, तत् कियत्याचिन्मात्रयाऽस्माकं मानसिकायासुखायेव।

प्रथमेऽधिकरणे विनयाधिकारिकाख्ये-राज्यव्यवस्थाप्रतिष्ठापनार्थं राज्ञां शिक्षणं प्रतिपाद्यते। अत्र प्रणिधयः,मन्त्रिणां नियुक्त्यवसरे तेषां राजनिष्ठापरीक्षा, बहुषु राजपुत्रेष्वेकस्य यौवराज्यपदवीप्रदानप्रसंगे विरोधौत्पत्तौ तेषु वर्तनक्रमः स्वरक्षार्थस्य राजभवनस्य निर्माणविधिः इत्यादिकं प्रतिपाद्यम्।

द्वितीयेऽधिकरणे अध्यक्षप्रचाराख्ये--जनपदरचनाक्रमः, सस्यजननानर्हे भूभागे कर्मान्तरकारित्वेन प्रयोजनप्राप्तिः, दुर्गरचना क्रमः, भाण्डागाराध्यक्षेण कर्तव्यः, आयव्ययलेखनं, कोशसंग्राह्याणां वस्तूनां परीक्षा, वन्यवस्तुरक्षणक्रमाः, युद्धोचितबाणादिरक्षणविधिः, कार्पासोर्णादिवस्त्रविषयकं ज्ञातव्यं, कृषिकर्म, नौकासंबन्धिनो नियमाः,

---

सन् राजा श्यामशास्त्रिणम् आनाय्य वृत्तान्तमेतं ज्ञापयित्वा 'स्वगृहे पूज्यते मूर्खः स्वग्रामे पूज्यते प्रभुः। स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ' इति श्लोकमुच्चार्य ''स्वदेशे भवान् मम प्रजा। विदेशेषु त्वहं भवतः प्रजा ''इति चोक्त्वा श्यामशास्त्रिणि विस्मयसन्तोषौ जनयामास।

कथायामस्यां बलवत् स्म श्रद्दधाति स्वान्तमस्मदीयं पूर्वं केभ्यश्चन वर्षेभ्यः। अद्यत्वे तु कथाया अस्या याथार्थ्ये संशयदोलाधिरूढं चेतो नः, कथायामस्यां कुत्रापि विश्वविद्यानिलयनाम्नः श्यामशास्त्रिनामोच्चारकविद्वन्नाम्नश्च कीर्तितत्वाभावात्। किमेषा कथा वज्रशुण्ठमहायागसोदरी ? तथा च श्लोकः 'वज्रशुण्ठमहायागे चण्डी तु शतदक्षिणा। तवाप्यर्धं ममाप्यर्धं मौनं स्वीकुरु पण्डित' इति।

अश्वरक्षणं, गजशास्त्रज्ञैः करणीयानि कर्माणि, रथाध्यक्षपदात्यध्यक्ष संगृहीतव्यवस्तुरक्षणविधिः, सेनापतिकर्तव्यानि इत्यादिकं प्रतिपाद्यम्।

तृतीयेऽधिकरणे धर्मस्थीयाख्ये- धर्मस्थाने निर्णेया विषयाः, विवादपदानि, विवादविषयाणां लेखनक्रमाः, गृहादिदायविभागः, वृद्ध्यर्थ धनव्यवहारः, निधिनिक्षेपादिव्यवहाराः, बलदर्पादिभिः परस्वापहरण प्रसंगे कर्तव्यानि कर्माणि, असभ्यपरुषादिवाक्यप्रयोगप्रसंगे कृत्यम्, दण्डादिभिः परताडनादौ अपराद्धेषु कृत्यानि इत्यादिकं प्रतिपाद्यम्।

चतुर्थेऽधिकरणे कण्टकशोधनाख्ये- कण्टकरूपेभ्यस्तस्करेभ्यो जनताया रक्षणं, अग्न्यादीनां दैवीनाम् आपदां प्रतीकाराः, उत्कोच ग्राहिणां विषये कृत्यम्, चोरपारदारिकादिकुत्सितजीविनां ग्रहणाय मुण्डिजटिलादिवेषधारिणां नियोजनं, अकाण्डे मृतानां परीक्षाः,राज धनापहारिणां स्वरूपज्ञानम् इत्यादिकं प्रतिपाद्यम्।

पञ्चमेऽधिकरणे योगवृत्ताख्ये- अपेक्षिते समये पूर्वनिर्णीताया मात्राया अधिकतरया मात्रया सुवर्णधान्यादिसंग्रहः, धनाधिकारिभिरनु सरणीया नियमाः, मरणासन्ने राज्ञि मन्त्रिभिरनुष्ठातव्या विधय इत्यादिकं प्रतिपाद्यम्।

षष्ठेऽधिकरणे मण्डलयोन्याख्ये- सप्तप्रकृतिविभागानां स्वाम्यमात्यजनपददुर्गकोशदण्डमित्राणां गुणाः, मित्रोदासीनामित्रादीनां लक्षणं च प्रतिपाद्यं वस्तु।

सप्तमेऽधिकरणे षाड्गुण्याख्ये- सन्धिविग्रहासनयानसंश्रयद्वैधीभावानां स्वरूपाणि, अपेक्षानुसारेण स्वराष्ट्रे किमभिवृद्धिरस्ति व्यृद्धिर्वाऽस्तीति

ज्ञानार्थमुपायाः, केवलमेकेन गुणेनानुष्ठितेनापि स्वराष्ट्राभिवृद्धिसंभवः, कदाचिद्गुणद्वयानुष्ठानापेक्षा, उदासीनस्य विषये विजिगीषुणा किं करणीयम् इत्यादिकं प्रतिपाद्यम्।

अष्टमेऽधिकरणे व्यसनाधिकारिकाख्ये- युगपद्बहूनां क्लेशानां सन्निपाते कस्याः समस्यायाः परिहारार्थमवधानं देयं, राज्ञां राज्यस्य च समस्याः, प्रजानां विविधाः क्लेशाः, पीडानां श्रेणयः, आर्थिकव्यवहारेषु संकटानि, सैन्ये समस्याः, मित्रराजसु समस्याः-इत्यादिकं प्रतिपाद्यम्।

नवमेऽधिकरणे अभियास्यत्कर्माख्ये- विजिगीषुणा कर्तव्यं स्वबल विषयकं चिन्तनं, बलवर्धनविषयका विचाराः, स्वबलस्य परबलानुगुण्येन स्थापनापेक्षा, बाह्या आभ्यन्तराश्च आपदः-इत्यादिकं प्रतिपाद्यम्।

दशमेऽधिकरणे सांग्रामिकाख्ये- सैन्यावासानां निर्मितिः, शत्रु पक्षत आक्रमणकाले सैन्यरक्षणोपायाः, सैनिकानां प्रोत्साहार्थं वक्तव्यानि वचनानि, काः काः भूमयो रथानुकूलाः अश्वानुकूलाः पदात्यनुकूलाश्चेति बोधः, पर्याप्तया मात्रया गजाश्वदिष्वसत्सु किं करणीयम्, विविधाः सेनाव्यूहाः, केषुचन प्रसंगेषु युद्धमकृत्वा मन्त्रालोचन एवावधानं देयम्- इत्यादिकं प्रतिपाद्यम्।

एकादशेऽधिकरणे प्रतिकूलसंघस्य सदस्येषु परस्परेण भेदं जनयितुमनुष्ठातव्या उपायाः, कदाचिच्च प्रतिकूलसंघमुख्यस्य वधोऽनि वार्यश्च इत्येतत् प्रतिपाद्यम्।

द्वादशेऽधिकरणे आबलीयसाख्ये- शत्रुराजे बलवत्तरे सन्धि करणार्थं दूतसंप्रेषणं, सन्धिमनभ्युपगच्छति शत्रुराजे किं करणीयं,शत्रु

मुख्यानां गूढो वधः, शत्रौ प्रबलतरशक्तिमति एकाकिना राज्ञा किं करणीयम्-इत्यादिकं प्रतिपाद्यम्।

त्रयोदशेऽधिकरणे दुर्गलम्भोपायाख्ये शत्रुदेशं प्राप्तुकामेन राज्ञा स्वसर्वज्ञताख्यापनप्रकाराः, स्वीयानां स्पशानां परदेशे निवासनं, वञ्चनया शत्रोस्तद्दुर्गान्निस्सारणप्रकारः, शत्रुराजदुर्गान् परितः स्वसैन्यस्थापनयोग्यः कालः, जिते परराज्ये तत्प्रजासु विश्वासोत्पत्त्युपायाः-इत्यादिकं प्रतिपाद्यम्।

चतुर्दशेऽधिकरणे औपनिषदिकाख्ये- शत्रुषु विषशस्त्र-चित्त विकार-कुष्ठप्रमेहप्रभृतिरोगोत्पत्त्यादयः प्रयोगाः, जनतावञ्चनाय अङ्गारराश्यादिषु पादचलनाद्यर्हतां संपादयन्तो योगाः, अन्तर्धानकृतो योगाः, शत्रुराजभिः कृतेषु स्वजनक्लेशकारिषु योगेषु तत्प्रतीकारोपायाः-इत्यादिकं प्रतिपाद्यम्।

पञ्चदशेऽधिकरणे तन्त्रयुक्त्याख्ये- अर्थशास्त्ररचनायां कृतानां विधीनामनुसारेण तद्गतवाक्यानां वर्गीकरणं प्रतिपाद्यम्।

अर्थशास्त्रे दुर्गनिर्माणं, सैन्यविषय इत्यादिकं यद् वर्णितं तद् रचयितुश्चतुरस्रं विबोधातिशयं द्योतयति पठितॄणां चैतद्विषयकं ज्ञानमुत्पादयति।तस्मात् प्राचीनेषु विश्वकोशेष्वर्थशास्त्रस्य स्थान मप्रकम्प्यम्।

अत्र कश्चन पर्यनुयोगः प्रकृतः।कथं कौटिल्येनैकाकिना सता एतावान् विषयराशिरधीतः सन् लेखनाकारं प्रापितः स्यादिति। विशिष्य गजाश्वदुर्गादिषु विषयेषु कौटिल्येन दर्शितं ज्ञानं पठितॄणां

हृदये विस्मयं जनयति, संशयमपि विदधाति 'किमेक एव कौटिल्य एतत् सर्वं स्म जानात्याहोस्वित् अर्थशास्त्रमिदं नानाकर्तृकं वे'तिरूपम्। अस्माकमित्थं प्रतिभाति। यद्यपि सर्वेष्वेतेषु प्रतिपाद्येषु गजविषयादिषु स्यान्नाम ग्रन्थकर्तुरध्ययनाभावः तथापि तत्तद्विषयान् ज्ञातृभिः सह संभाषणेन तैः श्रावितानां विषयाणां तेन कृतं लेखनं निराबाधमिति। यथा तत्तद्विषयानभिज्ञैर्लेखनरचनामात्रकौशलवद्भिस्तत्तद्विषये ज्ञातृभिः संभाषणेन ज्ञाता विषया प्रबन्धाकारं कार्यन्ते, प्रकाश्यन्ते चाधुनिकीषु पत्रिकासु, तथेदमपीति द्रष्टव्यम्। तस्मान्नानाविषयराशेरर्थशास्त्रस्यानेक कर्तृकत्वाभ्यूहः कैश्चिदुद्भावितो न सम्यक्।

अत्रेदं तत्त्वम्। book इति शब्दो ग्रन्थ इत्यर्थकः। बैबल्ग्रन्थे विविधानां लघुग्रन्थानां समुच्चयोऽस्तीति तावदविवादम्। तस्मादेव तत्र त्यानां लघुकायकानां ग्रन्थानां the book of Isaiah। इत्यादीनि नामधेयानि प्रसिद्धानि। न तु New Testament इत्यत्र Mathews, Mark इत्यादयो ग्रन्था एकस्यैव ग्रन्थस्य विविधाः खण्डा इति कोऽपि सचेताः प्रतिपादयितुमीष्टे। बैबल्ग्रन्थस्य नानाग्रन्थ समुच्चयत्वरूपं निगूहितुकामास्तद्भक्ताश्चातुर्येण book शब्दस्य A major division of a long written composition (Word Web Dictionary) इत्यर्थमकल्पयन् येन बैबल्नामकस्य ग्रन्थसमुच्चयस्य ग्रन्थसमुच्चयरूपं पिहितं भवति। भारतीयानां प्राचीनेषु ग्रन्थेषु तु सर्वत्र नानाकर्तृकत्वं प्रक्षेपभूयिष्ठत्वं च प्रतिपादयितुं वैदेशिकानां ब्रह्मास्त्रमिव महासाधनं bookशब्द आसीत्। तस्मान्मतिकृत एव

तेषां प्राचीनभारतीयग्रन्थानामनुवादप्रसंगे सर्वदा अध्यायभागखण्डादि पर्यायत्वेन bookशब्दप्रयोगः। आस्माका अपि केचिदिङ्ग्लीष्भाषया संस्कृतग्रन्थानामनुवादप्रसंगे 'अध्यायः, खण्डः, भागः' इत्यादिशब्दस्थलेषु bookशब्दं निवेशयन्तोऽर्थशास्त्रादीनां नानाकर्तृकत्ववादनिरसने क्लिश्नन्ति। इत ऊर्ध्वम् इङ्ग्लीष् भाषया संस्कृतग्रन्थानामनुवादका भारतीया bookशब्दम् अनिवेशयन्तः chapter, segment, part इत्यादीनां शब्दानां प्रयोगं क्रियासुः।

## ६.नाट्यशास्त्रम्

नाट्यशास्त्रं भरतेन निर्मितम्। भरत इत्यस्य शब्दस्य नट इत्यर्थत्वात् केनचिन्नटेनैव रचितमिदमित्यत्र न संशयकणिका। अत्रत्या भाषा नातीव प्राचीनेति विज्ञानां मतम्। रङ्गप्रयोगस्य सर्वेष्वपि प्रधानेषु गौणेषु च विषयेषु नटा ज्ञानिनो भूयासुरित्याशासानेन ग्रन्थकर्त्रा नाट्याङ्गत्वेन बहवो विषया निरूपिताः।

कदा शास्त्रमिदं रचितमिति निःसन्दिग्धं कथनमशक्यप्रायम्। विकिपीडियाप्रभृतिष्वन्तर्जालेष्वध्येतत् प्रबन्द्धारो नाट्यशास्त्रं क्रि.पू. तृतीयद्वितीयशतकयोर्मध्ये प्रणीतं पश्यन्ति। तत्र प्रमाणं त एव जानन्तु।

केदारनाथेन १९४३ ईसव्यां संपादिते निर्णयसागरप्रकाशिते नाट्यशास्त्रसंस्करणे स्वीकृतस्य पाठस्यानुसारेण नाट्यशास्त्रस्थानां

पद्यानां संख्या ५३७८।पादटिप्पण्यां प्रणोदितानां पद्यानां संख्याया योगेन आसन्नषट्साहस्री भवत्याहत्य संख्या।१३ पद्यात्मकस्त्रिंशोऽध्यायो ह्रस्वतमः।४४२ पद्यात्मको द्वात्रिंशोऽध्यायो दीर्घतमः।

पद्येष्वनुष्टुबेव विजृम्भते प्रायः।केषुचन स्थलेषु तु अनुष्टुब्भिन्नानि च्छन्दांसि।तत्र तत्रार्या स्वात्मानं दिदर्शयिषते।छन्दोविवृतिविषयकेऽध्याये त्वनुष्टुब्भिन्नानां छन्दसामुपयोगो यदस्ति तत् सहजम्।केषुचनाध्यायेषु गद्यरचनाऽक्षिलक्ष्यीक्रियते।

यद्यप्यत्रत्या भाषा सरला ललिता च तथाप्येतदपवादत्वेन केषुचन स्थलेषु यदन्वयक्लेशस्तल्लिपिकरप्रमादजेभ्योऽपपाठेभ्यः।

नाट्यशास्त्रस्य कतिपयेषु संस्करणेषु षट्त्रिंशदध्यायाः सन्ति अपरेषु तु संस्करणेषु सप्तत्रिंशदध्यायाः।द्व्यध्याययोरेकाध्यायत्वेन योग, एकस्यैवान्तिमाध्यायस्य द्व्यध्याययोर्विभजनं वाऽत्र कारणं भवितु मर्हति।अपि चाध्यायाभिधानक्रमयोर्विभिन्नेषु संस्करणेषु नैकरूप्यम्। तस्मादध्यायसंख्यामददानैरस्माभिरध्यायाभिधानानि वक्ष्यमाणेन क्रमेण लिख्यन्ते-द्वित्रा विषयाश्चावरणचिह्नान्तः सूच्यन्ते न तु सर्वे विषयाः।

नाट्योत्पत्तिः(चतुर्भ्यो वेदेभ्यः पाठ्यगीताभिनयरसानाददानेन ब्रह्मणा पञ्चमो वेदो नाट्यवेदाख्यः सृष्टः),मण्डपविधानं(त्रिप्रकाराणां नाट्यशालानां विवरणं),रङ्गदैवतपूजाविधानं(नाट्यप्रयोगसाफल्याया नुष्ठेया देवतापूजा),ताण्डवलक्षणं(त्रिपुरदाहामृतमन्थनाख्ययोर्द्वयोर्नाट्य योः प्रयोगं दृष्टवता शङ्करेण तत्र नृत्ययोजनाय सूचना तण्डुना नृत्य नृत्तशिक्षणं ),पूर्वरङ्गविधानं(रङ्गे वाद्यवादकानां समुपवेशनस्थानं पुष्पा

ञ्जलिः नृत्यगीतयोर्योजनं विदूषकप्रवेशविचारः),रसाध्यायः (शृङ्गार हास्यकरुणरौद्रवीरभयानकबीभत्साद्भुताख्यानां रसानां विवरणं तत्तद्रसा धिदेवतानां परिचयः रसभावयोः सम्बन्धश्च ),भावव्यञ्जनः (रतिहास शोकक्रोधोत्साहभयजुगुप्साविस्मयाख्याः स्थायिभावाः त्रयस्त्रिंशत् व्यभि चारिभावाः अष्टौ सात्त्विका भावाः एतेषां रङ्गे प्रयोगः),उपाङ्गाभिनयः (आङ्गिकवाचकाहार्यसात्त्विकाख्याश्चत्वारोऽभिनयाः देहस्थैरवयवै र्नेत्रादिभिः प्रदर्शनीया अभिनयाः), अङ्गाभिनयः(विविधाः हस्तमुद्राः एकेन हस्तेन दर्शनीया मुद्राः हस्तद्वयेन दर्शनीया मुद्राः नृत्तहस्तमुद्राः कट्यूरुजङ्घादीनां चालनविधयः ),चारीविधानं (एकपादचलनेन चारी द्वयोः पादयोश्चलनेन च करणं भवति भूमिचार्य आकाशचार्यश्च व्यायामाः तदङ्गत्वेन नटानां देहेषु तैलाभ्यङ्गस्य यवाग्वा च मर्दनस्यापेक्षा), मण्डपकल्पनं (रङ्गे मण्डलाख्यं चलनं यच्चार्या योगेन जायते मण्डलकरणार्थं नृत्तहस्तपादकट्यादिप्रयोगाः),गतिप्रचारः(रङ्गे विविधाः पादगतयः दिनरात्रयोर्योग्या गतयः राजविदूषकरोगिभीतादीनां योग्या गतयः निद्राभिनयाः उपवेशनाभिनयाश्च), कक्ष्याविभागाङ्गविधानं(रङ्गे पात्राणां प्रवेशः रङ्गतो बहिर्गमने नियमाः आवन्तीपाञ्चाल्यौड्रमागधी दाक्षिणा त्यानां वेषादिकान् प्रवृत्तीश्च सम्यगवधाय तत्तदनुगुणा अभिनयाः प्रयोक्तव्याः लोकधर्मी यदभिनयो कृतलोकानुकरणः नाट्यधर्मी यदभिनयो नाट्यशास्त्रोचितः च),छन्दोविधानं/वागभिनयः(अक्षराणां प्रभेदः तदुच्चारणस्थलानि अनुष्टुब्जगती शक्वर्यादिभेदाः समविषमार्धसम वृत्तानि),छन्दोवृत्तविधिः(तनुमध्यामालिन्यादिषष्ट्यधिकवृत्तानि आर्याया

श्च प्रभेदाः), अलंकारलक्षणं(काव्यलक्षणानि उपमादीपकरूपकादीनां प्रभेदाः काव्यगुणाः काव्यदोषाः मृदुलैः शब्दैः काव्यकरणो पदेशः), भाषालक्षणं (प्राकृतशब्दानां शुद्धदेशजविभ्रष्टाख्याः प्रभेदाः भाषाणामति भाषाजातिभाषादिभेदाः मागधीशूरसेनीप्राच्यावन्ती प्रभृतिसप्तभाषा प्रयोगः विविधेषु राष्ट्रस्थलेषु शब्दोच्चारणवैभिन्न्यं रङ्गे पात्रेषु परस्परेण संबोधनप्रकाराः पाठ्यगुणाः काकुस्वराः),दशरूपलक्षणं(नाटकप्रकरणा ङ्कव्यायोगभाणसमवकारवीथीप्रहसनडिमेहा मृगाख्यानां रूपकाणां लक्षणानि एकस्मिन्नङ्के एकमासावधियोग्यैव घटना दर्शनीया अधिकतराव धियोग्याया घटनायाः प्रयोक्तव्यत्वे तु प्रवेशकविष्कम्भकयोरुपयोगः करणीयः), इतिवृत्तम्/ सन्ध्यङ्गविकल्पः(मुखप्रतिमुखगर्भावमर्शोपसंहृति नामकाः पञ्च सन्धयः बीजबिन्दुपताका प्रकरीकार्यनामिकाः पञ्चार्थ प्रकृतयः आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाख्याः पञ्चावस्थाः), वृत्तिविकल्पः (भारत्यारभटीकैशिकीसात्त्वती वृत्तयः), आहार्याभिनयः (वेषभूषावर्णनम् पुस्तालङ्काराङ्गरचनासंजीवा ख्यानि चतुर्विधानि नेपथ्यानि सन्धिमव्याजिमचेष्टिमनामानि त्रिविधानि पुस्तानि), सामान्याभिनयः (सत्त्वातिरिक्तोऽभिनयः अर्थात् मानसिका वधानपूर्वकोऽभिनयः श्रेष्ठः समसत्त्वोऽभिनयो मध्यमः सत्त्वहीनोऽधमः शोभाविलासमाधुर्यगम्भीरता दयः स्त्रीणां पुरुषाणां चालङ्काराः रूपरसस्पर्शाद्यभिनयप्रकाराः संभोगाभिनयाः कामदशाः दयितयोः संभाषणविधय इत्यादि), वैशिकाध्याय(विशेषेण वेश्याव्यवहारकलाः तदनुगुणाः पुरुषाणां विंशतिगुणाः गुणहीनेषु पुरुषेषु स्त्रीणामनुरक्त्यभावः स्त्रीणां यौवनस्य

पञ्च दशाः पुरुषाणां पञ्च प्रकृतयः), प्रकृतिलक्षणं (उत्तममध्यमाधमाः प्रकृतयः नपुंसकवनेचरादीनां प्रकृतयः चत्वारो नायकाः चत्वारो विदूषकाः अभिनेत्रीणां स्त्रीणां लक्षणानि राजसचिव प्राड्विवाकादीनां लक्षणानि ),चित्राभिनयः(अङ्गाद्यभिनयस्यैव विशेषः विचित्राभिनय निरूपणम् चन्द्रसूर्यसरोवरनक्षत्रादिदर्शनाभिनयः कतिचित्पशु पक्षि दर्शनाभिनयः विषवेगमरणाद्यभिनयः),प्रकृतिविकल्पनम् (लिङ्गाननुगुणा भिनयः अर्थात् स्त्रिया पुरुषपात्राभिनयः पुरुषेण स्त्रीपात्रा भिनयः), सिद्धिव्यञ्जकः(हास्याद्यभिनयः नाटकप्रयोगसाफल्यबाध कारिणः प्राकृतिका वाताग्निगजादिसंभवा विघ्नाः नाटकपात्रधारिभिः संवाद विस्मरणादिकं विवादप्रसंगे प्राश्निकानां नियुक्त्या विवादपरिहारोपायाः दिनेऽभिनयसमयः ),रसजातिलक्षणः(रसानुकूलगान्धर्वजातिलक्षणं गीतानां स्वरूपाणि तत्प्रयोगाश्च विपञ्च्यादिप्रयोगाः), सुषिरातोद्याधि कारः (सुषिरवाद्यानां वेण्वादीनां वादनप्रकारः वेण्वादिभ्यो वाद्येभ्यो निःसरतां संगीतस्वराणां विधानम्), तालविधानः(संगीतोचितानां तालानां परिचयः लयविषयः तालवादने पञ्चप्रकाराणां हस्तचलनानां विधानम् अङ्गुलिसंञ्चारः ),ध्रुवातोद्यः(ध्रुवासंज्ञकानां गीताङ्गानां निरूपणं अक्षरच्छन्दांसि शौरसेनी प्राकृतपद्योहरणानि ध्रुवागानेन वाद्यानां वादनं), गुणदोषाध्यायः (गायनानां गुणदोषविवेचनं), पुष्करवाद्यः (अवनद्धानां वाद्यानां प्रकारः चत्वारि तद्वादनविधानानि अवनद्धवाद्य वादकानां गुणाः), भूमिविकल्पः( विविधानां भूमिकानामथवाऽभिनेतॄणां जनानां मुखभूषणादिविन्यासाः माल्यकृद्-वेषक-चित्रकर-रजक-

द्रव्यकर-कुशलवानां स्वरूपाणि ),गुह्यविकल्पः(पूर्वरङ्गविधानं नान्दी महिमा नाट्येऽनुचितवस्तुऋषिविडम्बनादिकं दृष्ट्वा रुष्टेभ्यो महर्षिभ्यो निःसृष्टाः शापोक्तयः यत्फलतयाऽवसन्नप्रायं नाट्यशास्त्रं कोहलेनो द्धृतम्।)

अन्तिमोऽध्यायो लिपिकरप्रमादैः पाठान्तरैश्च पिहित वास्तविकस्वरूपः।अधुनोपलभ्यमानो भरतनाट्यशास्त्रपाठः कोहलेन संपादित इत्यर्थम् एतस्मादध्यायान्निःसारयितुं शक्यते किमिति विचारणीयम्।

## ७.बृहत्संहिता

एष ग्रन्थः शताध्यायात्मकः- ३९००पद्यात्मकश्च विस्मयजनको विश्वकोशः।बृहत्संहिता नाम महान् समुच्चयः।संहिता नामान्यैः कृतानां ग्रन्थानां ग्रन्थभागानां वा संकलनम्।परन्तु बृहत्संहिता स्वोपज्ञम्।कदाचिच्च अन्यरचितानां ग्रन्थानां ग्रन्थभागानां वा अधमर्णत्वमत्र पाठकानां ज्ञायते।तादृशेषु प्रसंगेषु निःसंकोचं परकृतीनामाधमर्ण्यमत्र सुविस्पष्ट-मभिहितं ग्रन्थं कर्त्रा।अस्य भागस्य रचनार्थं माननीयोऽसाविति स्पष्टं नामतः कीर्तयति ग्रन्थं कर्ता।

रचनाकारोऽस्या बृहत्संहितायाः प्रसिद्धो ज्योतिर्विद् वराह मिहिरः। धन्यजन्मनोऽस्य पृथिव्यामवतारः क्रि.श.५०५ ईसव्यामिति विदितम्।पिताऽस्यादित्यदासः।रचना अदसीया इमाः-१.पञ्चसिद्धा

न्तिका।२.बृहज्जातकम्।३.लघुयात्रा(योगयात्रा)। ४.विवाहपटलम्। ५.बृहत्संहिता। एतासु रचनासु प्राथमिकीनां चतसृणां ज्यौतिषकोटयन्त र्गतत्वं सुगमम्। अन्तिमा कृतिस्तु प्रकृतविचार्यो विश्वकोशः।

एते विचारा बृहत्संहिताप्रतिपाद्याः १-२६.पीठिका, विविधा ज्यौतिषोपयोगिनो विषयाः, ग्रहचारो ग्रहभुक्तिर्ग्रहयुद्धमित्यादि। २७. वायुर्यद् वाति विविधैः प्रकारैस्तेषां फलानि।२८.वृष्टेः पूर्वानुमानानि। २९.पुष्पलतासमृद्ध्या आरोग्य-वृष्टि-दुर्भिक्षादीनां पूर्वानुमानानि। ३०.सन्ध्याकालिकानां वर्णानां विविधानां च प्रकाराणां वीक्षणेन निसर्गे संभाव्यमानानां घटनानां पूर्वानुमानम्।३१-३२.भूकम्पः। ३३.उल्का। ३४.सूर्यपरिवेषश्चन्द्रपरिवेषश्च। (सूर्यं चन्द्रं च परितः कदाचिद् दृश्या वर्तुलाकारा प्रकाशरेखा।) ३५.ऋजुरोहितम्। ३६.मरीचिकायाः स्वरूपं तदुत्पत्तौ कारणं च।३७.अतिपेलवानां मेघानां कारणतः (हिमनिबिडेषु प्रदेशेषु )दृश्यमानस्य प्रतिसूर्यस्य लक्षणानि।३८.वायोरतितीव्रेण वेगेन उद्धूयमानस्य धूलेर्विचारः। ३९.वात्या।४०-४१.ज्यौतिषशास्त्रानुसारिणी कृषिसमृद्धिः। ४२.नक्षत्र-राश्यानुगुण्येन वित्तस्फातिः, महार्घता, मौल्यह्रासश्च।४३.इन्द्रध्वज-निर्माणविधानं,तन्महिमानश्च।४४.देवताविग्रहाः,तथा, वह्नि-वृक्ष-स्तम्बकरि-वृष्टि-जल-प्रसूतिसमय-चतुष्पादिपशु-वायु-ध्वजानाम् आकस्मिकानि वैपरीत्यानि च।४७.आकाशकायानां दर्शनेन ज्ञातव्यं राष्ट्रभवितव्यम्। ४७.पुष्ये मासि राजभिरनुष्ठातव्यो मङ्गलस्नानाचारः। ४९.राजभिर्धारणीयानि मुकुटानि।५०.खड्गानां लक्षणम्। ५१.दैहिकानाम्

अङ्गानां परीक्षया सूचनीयानि भवितव्यानि।५२.श्वित्रैः (pimples) सूच्यमानं भवितव्यम्।५३.वास्तुविद्या।५४.दकार्गला-अर्थात्, पृथ्व्याः बाह्यैः कैश्चिन चिह्नैर्भूम्यन्तर्गतस्य जलस्य शोधनं, वापीकूपतटाक निर्माणायोत्खननप्रसंगे मध्ये जायमानानां शिलानां भङ्गार्थम् अभ्युपायाः, लब्धे जले पानानर्हे तस्य पानार्हतासंपादनार्थं क्रियमाणा अभ्युपायाः। ५५.वृक्षायुर्वेदः।५६.देवस्थानलक्षणम्।५७.अतिदृढस्य वज्रलेप स्य निर्माणम्।५८.प्रतिमालक्षणम्।५९.वनसंप्रवेशविधिः। ६०.मूर्तिप्रति ष्ठापनम्।६१-६७.गो-श्व-कुक्कुट-कूर्म-च्छागा-श्व-गजानां लक्षणानि।६८-७०. स्त्रीपुरुषाणां लक्षणानि। ७१.वस्त्रभङ्गे शकुनम्। ७२-७३.छत्रचामरयोर्लक्षणम्। ७४.स्त्रीप्रशंसा।७५.सौभाग्यकरणम् (personality development?)।७६.वीर्यवृद्धेरुपायाः। ७७.सुगन्धद्रव्यनिर्माणम्। ७८.संभोगसंबद्धाः केचन विचाराः। ७९.शय्या सनानां लक्षणम्।८०-८३.मुक्तापद्मरागमरकतानां लक्षणम्। ८४.दीप लक्षणम्।८५.दन्तधावनार्थानां काष्ठानां लक्षणम्।८६-९६. विविधानि शकुनानि।९७.केषुचन नैसर्गिकेषु वैपरीत्येषु संभूतेषु तत्फलजनन समयावधिः।९८-१००.तिथिनक्षत्रकरणसंबद्धानां नित्यनैमित्तिकानां कर्मणां सुमुहूर्ता दुर्मुहूर्ताश्च। १०१.जन्मनक्षत्रानुगुण्येन भविष्यकथनम्। १०२.खगोलीयानां राशीनां विभागः। १०३.विवाहप्रसंगे ग्रहनक्षत्रादीनां स्थितिगतीरवलम्ब्य पूर्वानुमेयानि भवितव्यानि; विविधच्छन्दोबन्धानाम् उदाहरणनि च ।१०४-१०५. नक्षत्रपुरुषोपासनाः।१०६.उपसंहारः। विषयानुक्रमणिका।

एतेन विस्पष्टायते यद् बृहत्संहिता विस्मयजनकानां वस्तूनां महान् रसराशिः। ज्यौतिषे शास्त्रे ग्रन्थं कर्तुः परमा प्रीतिः। प्रकृते ग्रन्थे सर्वेऽपि विषयाः ज्यौतिषशास्त्रेणैव परम्परया साक्षाद् वा संबद्धा इति स पर्यगणयदिति प्रतिभाति। तस्मादेव कारणात् सः "स्वबुद्ध्या ख्येन मन्दरेण लोकापकारशास्त्राख्यं चन्द्रं ज्योतिःशास्त्रसमुद्रात् निर्मथ्योद्धृत वानस्मि[१]" इति वदति।

अत्र भूयस्या मात्रया लभ्यमानं छन्द आर्याछन्दः। परन्तु विविधानां छन्दसां प्रयोगेषु कवेरतिभूयसी नैपुणी। छन्दःशास्त्रदृष्ट्या १०३ तमोऽध्यायः कुतूहलप्रदः। अत्र ६३ छन्दसां नामानि मुद्रालंकारेण योजितानि। तस्मात् संस्कृतच्छन्दःशास्त्रचरित्रं रचयितॄणामपि बृहत्सं हिता प्रयोजनाधिक्यं जनयतीत्यत्र न संशीतिलेशः।

## ८.युक्तिकल्पतरुः

भोजेन प्रणीतोऽयं ग्रन्थः। युक्तिरिति ग्रन्थाध्यायानामभिधानम्। अत्र केषाञ्चित् 'युक्तिशब्दस्य (विषय)योजनमित्यर्थो ग्राह्यः। तस्माद्, युक्तीनाम् अर्थात्, योजितानां विविधानां विषयाणां प्रदाता कल्पतरुकल्प एष ग्रन्थ इति ग्रन्थनाम्नोऽर्थ' इति प्रतिभासेत ।वस्तुतस्तु युक्ति कल्पतरुरिति भोजस्य बिरुदमिव। स्वबिरुदं स्वग्रन्थनामत्वेन भोजो

१.ज्योतिश्शास्त्रसमुद्रं प्रमथ्य मतिमन्दराद्रिणाऽथ मया।
लोकस्यालोककरः शास्त्रशशाङ्कः समुत्क्षिप्तः ॥(उपसंहारपद्येष्वादिमम्)

निहितवान्। अग्रे कारिते भोजप्रणीतग्रन्थानां परिचये विषयोऽयं करतलामलकायते।

अत्रत्याः केचन विषया अपरेभ्यो ग्रन्थेभ्य आदत्ता इति स्पष्टम्। सत्यां तु भिन्नायां दृशि''भोजस्तु''इत्युक्त्वा स्वां दृष्टिं स्पष्ट मभिदधाति ग्रन्थकर्ता। स्थूलेयं योजितविषयानुक्रमणिका :-

राजनीतिः, राजदूतादिलक्षणं, सैन्यं, युद्धं, सन्धिः, आश्रयः, द्वन्द्व(युद्ध)प्रकाराः,केषु केषु स्थलेषु युद्धे जयार्थं काः का युक्तयोऽनु ष्ठातब्याः, धनुर्द्वन्द्वादिकं, वैरिभिर्दुष्प्रवेश्येषु स्थलेषु क्रियमाणं द्वन्द्वमुत्तमं, नगरनिर्माणसमयः, दीर्घचतुरस्रादयो नगरप्रभेदाः, दीर्घचतुरश्रत्र्यश्रादि नगरनिर्माणफलानि, नगरे विविधेषु भागेषु केषां केषां निवासः परिकल्पयितव्यः, गजशालादिनिर्माणं कुत्र न कर्तव्यं, परैर्निर्मितेषु नगरेषु राजा न वसेत्, नदीश्मशानशैलवनसमीपेषु प्रदेशेषु गृहनिर्माणं न कुर्वीत, गृहस्य पुरस्तात् कासु कासु दिशासु प्लवे(प्रायशः Slope इत्यस्मिन्नर्थे प्रयुक्तोऽयं शब्दः) सति शोभनं, ज्यौतिषशास्त्रानुसारेण वास्त्वारम्भप्रवेशादिमुहूर्ताः, द्वारविषयः, प्राचीरं(बहिर्भित्तिः), राजगृह निर्माणं, काष्ठपीठादिविविधपीठवर्णनं, छत्रनिरूपणं, ध्वजचामरनि रूपणं,भृङ्गारः(अभिषेकपात्रं), चषक(पानपात्र)निरूपणं, प्रसाधनी (कङ्कतिका),वितानं(शय्या?), दर्पणाः, वस्त्रम् अलङ्काराः वज्रविद्रुमादिरत्न निरूपणं, अयस्कान्ताः शङ्खाः, खड्गभेदास्तन्निरूपणं च, शरीरावरकं चर्मकवचं, धनुर्बाणविषयाः, युद्धे जयार्थं नीराजनम्, अश्वलक्षणं, अश्वारिष्टम्(अश्वदेहे दोषाणां सत्त्वे तज्जीवितावधिः तन्मृत्युसूचना)

गजलक्षणं, वृषमहिषसारमेयाजलक्षणानि, नौकालक्षणं, नौकानिर्माणोप युक्तकाष्ठवर्णनं, अधमा नौकाः, दीर्घोन्नताभेदेन द्विविधे नौके च।

भोजेन रचितानां ग्रन्थानां संख्या चतुरशीतिरिति सरस्वती कण्ठाभरणस्य व्याख्यात्राऽजडेन भणितं ''चतुरशीतिबिरुदप्रकाशित स्वकृतग्रन्थसमाजः श्रीभोजराज''इति वदता।प्रकटितेषु भोजप्रणीत ग्रन्थेषु रचितासु पीठिकासु भोजरचितग्रन्थपट्टिकानां काचनास्तब्यस्ततेवानु भूताऽस्माभिः।ताभ्योऽधोनिर्दिष्टानि नामान्युद्धृतानि-

१.राजमृगाङ्कः(ज्यौतिषम्। केवलं अष्टाविंशतिपत्राण्यस्य ग्रन्थ स्योपलब्धानि।रणरङ्गमल्लेन रचितमिदमित्यन्तिमे पद्ये प्रोक्तम्।रण रङ्गमल्ल इति भोजस्य बिरुदम्।)

२.राजमार्तण्डः(फलितज्यौतिषम्।१४२१ पद्यैः समुपेतोऽयं ग्रन्थः।दामोदराख्येनान्येन विरचितत्वमस्याभ्यूहितं विश्वेश्वरनाथाख्येन विदुषा।)

३.विद्वज्जनवल्लभः(फलितज्यौतिषम्।१७अध्यायैर्ग्रथितोऽयम्।)

४.भुजबलनिबन्धः(फलितज्यौतिषम्।१८ प्रकरणेषु विभक्तम्।)

५.शृङ्गारप्रकाशः(अलङ्कारः।शृङ्गारप्रकाश इति भोजस्य बिरुद मित्यभ्यूहामहे।३६ प्रकाशाख्येष्वध्यायेषु विरचितो महाकायो ग्रन्थ एषः।एषा चात्रत्यानां विषयाणामनुक्रमणिका-प्रकृत्यादिप्रकाशात्म-प्रातिपदिक-प्रकृत्यादिशब्द-क्रियाद्यर्थचतुष्टय-उपाध्याद्यर्थचतुष्टय विभक्त्यर्थादिचतुष्टय-केवलशब्दसंबन्धशक्ति-सापेक्षशब्दशक्ति-दोषहानगुणोपादान-शब्दार्थोभयालङ्कार-रसावियोगप्रकाशन-

प्रबन्धाङ्गचतुष्षष्टिचतुष्टय-रतिप्रकाशन-हर्षादिभावप्रपञ्चपञ्चक-रत्यालम्बन विभाव-रत्युद्दीपनविभाव-अनुभाव-धर्मशृङ्गार-अर्थशृङ्गार-काम शृङ्गार-मोक्षशृङ्गार-अनुरागस्थापन-संभोगविप्रलम्भ-विप्रलम्भान्वर्थ-साधर्म्यवैधर्म्य-संकेत-अभियोग-दूतसंप्रेषणादि-वैधर्म्यतोमान-प्रवास वर्णन-करुणविप्रलम्भ-संभोग-आनन्तर्य-मानानन्तर-संभोगावस्थाः। एतेषु प्रकाशेषु षड्विंशस्य प्रकाशस्य लोप इति संपादकौ राघवन् जोस्यर् चाब्रूताम्।वस्तुतस्तु पञ्चदशप्रकाशत्वेन संप्रत्युपलभ्यमानो भागः प्रकाशद्वयात्मा।१२४तमपद्यानन्तरमेकस्य प्रकाशस्य समाप्तिः। तत्र पुष्पिकावाक्यं न लिखितम्।तदूर्ध्वमन्यः प्रकाश आरभते।तदन्ते यदस्ति पुष्पिकावाक्यं तच्छोडशप्रकाशयोग्यं सत् पञ्चदशप्रकाशयोग्यत्वेन लिखितम्।तदूर्ध्वं चासमाप्ति एकन्यूनाः संख्या लिखिताः प्रतिप्रकाशान्ते पुष्पिकावाक्येषु।पूर्वरागाख्यः प्रकाशः षड्विंशः।परन्त्वेषोऽन्यत्र लभ्यते। एतत् सर्वं लिपिकरप्रमादजन्यमित्यत्र न संदेहलेशः।तत्रभवता रेवाप्रसादे नापरः षड्विंशः प्रकाशः स्वयं सृष्टः स्वसंपादितस्य संस्करणस्य द्वितीयसंपुटे परिशिष्टत्वेन योजितश्च।)

६.सरस्वतीकण्ठाभरणम्(अलङ्कारः।५परिच्छेदेषु ८३१६ श्लोकै रचितम्।१९३४ ईसव्यां निर्णयसागरात् प्रकाशिते संस्करणे ‘परमारवंश्यो भोजदेव’ इति प्रबन्धे १३शे पृष्ठे भोजेन काचित् पाठशाला स्थापिता यस्या नामधेयं सरस्वतीकण्ठाभरणमिति ग्रन्थस्यास्य संपादकौ केदारनाथ वासुदेवशास्त्रिणौ यद् ब्रूतस्तद् विद्वज्जनवल्लभ-रणरङ्गमल्ल-विद्याविनोद-राजमार्तण्ड-समराङ्गणसूत्रधारेत्यादिनिजबिरुदान्येव ग्रन्थनामधेयत्वेन

निहितवतो भोजस्य सरस्वतीकण्ठाभरणमिति स्वकीयमेव बिरुदं ग्रन्थाभिधानत्वेन निधातुं प्रवृत्तिरिति ज्ञानस्याभावादभ्यूहसाम्राज्ये विजृम्भणाच्च। एतस्यां नामपट्टिकायां सरस्वतीकण्ठाभरणाख्या प्रथमेयं कृतिरलङ्कारविषयिका।)

७.चाणक्यराजनीतिशास्त्रम्(आनुष्टुभेन च्छन्दसा निबद्धानि सरलानि १६३ सुभाषितानि।अस्य चाणक्यमाणिक्यमिति संज्ञा कृता कृतिकर्त्रा।राजनीतिपरस्य चाणक्यीयार्थशास्त्रस्य प्रसिद्धत्वाद् भ्रान्त्या केनापि लिपिकरेण राजनीतिशब्दो ग्रन्थाभिधाने प्रवेशित इव।)

८.चारुचर्या(धर्मशास्त्रायुर्वेदयोरनुसारेण प्रतिदिनं जनैरनुष्ठातव्या विधयः।अर्थान्तरन्यासेन नीतिबोधिकायाः क्षेमेन्द्ररचिताया चारुचर्याया इयं भिन्नतरा।चारुचर्य इति भोजस्य बिरुदमिव।)

९.विविधविद्याविचारचतुरा (धर्मशास्त्रम्।विविधकामनानां सिद्ध्यै अनुष्ठेयानि होमादिकानि कर्माणि।विविधविद्याविचारचतुर इति भोजस्य बिरुदमिव।)

१०.सिद्धान्तसारपद्धतिः(धर्मशास्त्रम्।धार्मिकाः केचिद्विधयः)

११.समराङ्गणसूत्रधारः(वास्तुशास्त्रम्।ग्रन्थेऽस्मिन् पुराणां सौधानां च निर्माणक्रम इतरवास्तुशास्त्रग्रन्थानामपेक्षया विशदतरं वर्णितः। गजयन्त्र-व्योमचारिविहगयन्त्र-द्वारपालयन्त्र-योधयन्त्रादयो विस्मयप्रदा अन्यत्रानुपलभ्याः केचन विषया अत्र निरूपिताः।)

समर इति शब्दो युद्धार्थे प्रसिद्धः।परन्तु नायं ग्रन्थो युद्धवर्णन परः।किमर्थमभिधानमिदं ससमरशब्दमित्यत्र प्रकृतरचनाया द्वितीय

संपादकस्य वि.एस्. अगर्वाल्कस्यायमाशयः-''समर इति शब्दस्य मरणधर्मा मर्त्य इत्यप्यर्थः। मनुष्योपयोगिनां वास्तूनां निर्माणं कुर्वन्स्थपतिः मापनार्थं सूत्रमुपयुनक्ति।तस्मात् समरशब्दस्य प्रकृतेऽभिधाने मर्त्य इत्यर्थः।युद्धभूमौ विजयाय पूर्वयोजनां कुर्वन् मर्त्ययोग्यानां वास्तूनां च निर्माणं रचयंश्च मर्त्यः समराङ्गणसूत्रधारशब्देन सूच्यते''।समर इति शब्दान्मर्त्य इत्यर्थः कथं निःसरतीत्यत्र अगर्वालेव प्रमाणं न पुनर्व्याकरण कोषादिकम्।सूत्रधारशब्दविवृतौ अगर्वाल्कस्य मतमाद्रियामहे परन्तु समरशब्दार्थे तदीयायां विवृतावरुचिं दर्शयामो, युद्धमनुष्यशब्दयोः सम्बन्धस्य सादृश्यस्य समानार्थवत्त्वस्य चाभावात्।'समराङ्गणसूत्रधार' इति शब्दो भोजस्यैव बिरुदं ,'रणरङ्गमल्ल' इति तदीयेनान्येन बिरुदेनार्थ सामीप्यात्।नाटकसूत्रधारो यथा नाटकाभिनयनिर्देशनं करोति तद्वत् समराङ्गणे युद्धनिर्देशनं कुर्वन् समराङ्गणसूत्रधारो भवति।'राजमार्तण्ड' इति बिरुदं त्रयाणां ग्रन्थानां, 'राजमृगाङ्क' इति बिरुदं द्वयोर्ग्रन्थयोः, 'भुजबल'इति बिरुदमेकस्य ग्रन्थस्य, 'विद्वज्जनवल्लभः' इति बिरुद मेकस्य ग्रन्थस्य च नामत्वेन भोजः कृतवानिति न प्रस्मर्तव्यम्। अन्यत्रापि दृश्यते क्वाचित्की ग्रन्थकाराणां प्रवृत्तिः स्वरचितग्रन्थनामकरणे स्वनाम्न एव निधानमित्येवंरूपा।तथा हि-लक्ष्मीधरेण स्वरचितायाः सौन्दर्यलहरीव्याख्याया 'लक्ष्मीधरा' इत्येव नाम कृतम्।

१२.युक्तिकल्पतरुः(विश्वकोशकल्पो ग्रन्थः।अध्येतद्विषयं पूर्वमुक्तं प्रकृताध्यायसंबद्धत्वात्।)

१३.चम्पूरामायणम्(नाम्नैव स्फुटतरवस्तुकम्।सुन्दरकाण्डपर्यन्त

मेवेदम्।युद्धकाण्डरचनातः पूर्वं कवेर्मृत्युः कृतेरस्याः समाप्तौ बाधकोऽभवद् वा, रचितमपि युद्धकाण्डं केनापि कारणाद् विनष्टमुतानुपलब्धमेतावन्तं कालं वेति न निश्चीयते।एतत्कृतेः पञ्चानामपि काण्डानां पुष्पिकासु विदर्भराजकृतत्वेनोल्लेखो भोजनाम्नोऽसंकीर्तनं च भोजविरचितत्वेन प्रसिद्धानामितरासां कृतीनामेतस्याश्च कृतेरेककर्तृत्वे संशयं जनयतः। युद्धकाण्डचम्वो लक्ष्मणसूरिराजचूडामणिदीक्षितघनश्यामैकाम्रनाथैः पार्थक्येन रचिताः,उत्तरचम्वश्च यतिराजशङ्कराचार्यवेङ्कटाध्वरि प्रभृतिभिः।कुशलवचम्वाख्या कृतिस्तु वेङ्कामात्यस्य रचना।)

१४. शृङ्गारमञ्जरीकथा(द्वादश कथाः।)

१५.कूर्मशतकाख्यं स्तुतिद्वयम्(प्राकृतभाषया रचितं काव्यद्वयं यच्छिलाफलक उट्टङ्कितम्।काव्ययोर्द्वयोरपि परस्परेण संवदमानानि पद्यानि सन्ति।केषुचन पद्येषु प्रथमकूर्मशतकस्य द्वितीयकूर्मशतकं पाठान्तरमिव भासते भाव-सौसादृश्यात्।अत्र प्रयुक्तं छन्द आर्या। काव्ये कोऽपि भाषाचमत्कारो नास्ति।कूर्मावताराद् राज्ञो भोजस्य महत्तरत्वं द्वितीयस्य कूर्मशतकस्य कस्मिंश्चन पद्ये स्तुतम्।तस्मात् कृतेरस्या भोजरचितत्वे विवेचकानां स्वान्तं संशयदोलाधिरूढम्।)

१६.सरस्वतीकण्ठाभरणम्।(व्याकरणग्रन्थः।एतस्यां नाम पट्टिकायां षष्ठात् सरस्वतीकण्ठाभरणाद् भिन्नतरोऽयं ग्रन्थो यः सूत्ररूपः।प्रायशः समग्रेऽपि संस्कृतवाङ्मये सूत्ररूपाणां ग्रन्थानां मध्ये सरस्वतीकण्ठाभरणं महत्तमं यत्र सूत्राणामाहत्यसंख्या आसन्नषट् साहस्री।अष्टाध्यायीवत् सरस्वतीकण्ठाभरणेऽप्यष्टावध्यायाः प्रत्यध्यायं

च चत्वारः पादाः। उणादिसूत्रफिट्सूत्रवार्त्तिकगणपाठपरिभाषाणां ग्रन्थशरीरे योजनमस्य वैशिष्ट्यम्। विषयानुसारं सूत्रसृष्टिरत्र बोधसारल्यं जनयति। सप्ताध्याया लौकिकभाषाविषयकाः। अष्टमोऽध्यायो वैदिक भाषाविषयकः।)

१७.राजमार्तण्डः(आयुर्वेदः। योगसारसंग्रह इत्यन्यन्नामास्य। एतस्यां नामपट्टिकायां द्वितीयाद् राजमार्तण्डाद् भिन्नतरोऽयं ग्रन्थः। तैलौषधयोऽस्य प्रधानप्रतिपाद्यम्। आसन्नषष्ट्युत्तरपञ्चशतं ५६० पद्यानि सन्त्यस्मिन् ग्रन्थे।)

१८.राजमृगाङ्कः(आयुर्वेदः। एतस्यां नामपट्टिकायां प्रथमाद् राजमृगाङ्काद् भिन्नतरोऽयं ग्रन्थः। यद्यप्येतन्नामा कश्चन ग्रन्थस्तत्रभवता वा.वा.नटराजशास्त्रिणा संपादितः प्रकटितश्च तञ्जावूरु सरस्वतीमहल् लैब्ररी इत्यस्मान्मातृकालयात्( Tanjore Sarasvati Mahal Series-19 १९५०), किन्तु तत्रभवान् भोजप्रणीतत्वेन ग्रन्थममुं नैवाङ्गीकरोति-मनोहारिण्या प्राचीनया रीत्या भोजेन ग्रथितस्य राज मार्तण्डाख्यस्यायुर्वेदग्रन्थस्य, नवीनया शैल्या च ग्रथितस्य प्रकृतस्य राजमृगाङ्कस्य सादृश्यलेशाभावात्। नाप्ययं राजमृगाङ्कः सर्वान् आयुर्वेद विषयान् निरूपयति यः केवलं रसौषदिचूर्णयोगमात्रप्रतिपादनपरः। ''द्रविडदेशीयः कश्चनायुर्वेदविद्वान् श्रीशरभोजिमहाराजसमादृतो राजमृगाङ्कग्रन्थं निबद्धवानिति ममाध्यवसायः'' (उपोद्घातः पृ.४) इति तत्रभवानाह, यो 'राजमार्तण्डाख्ययोर्द्वयोः पार्थक्येन वैद्यकयोग ग्रन्थयोर्यथा भोजः कर्ता तद्वद् राजमृगाङ्कस्यापि भोजः कर्ता 'इति

पि.पि.एस्.शास्त्रिणो 'विचित्रां' संभावनां-''कुम्भकर्णो भकारेऽस्ति भकारोऽस्ति विभीषणे।तस्मात् तज्ज्येष्ठनाम स्याद् राभणो न तु रावणः[१]''-इति श्लोकार्थेन सदृशीं पश्यन् प्रणुदति।(तत्रैव पृ.४)

अत्रास्माकमियं बुद्धिपद्धतिः। भोजेन राजमृगाङ्काख्या कृतिः कृतेत्यत्र न द्वापरो योगशास्त्ररचनाया राजमार्तण्डनाम्न्या उपक्रमे-

''शब्दानामनुशासनं विदधता, पातञ्जले कुर्वता
वृत्तिं, राजमृगाङ्कसंज्ञकमपि व्यातन्वता वैद्यके।
वाक्चेतोवपुषां मलः फणिभृतां भर्त्रेव येनोद्धृतस्
तस्य श्रीरणरङ्गमल्लनृपतेर्वाचो जयन्त्युज्ज्वलाः॥''

इत्यस्मिन् पद्ये राजमृगाङ्कस्य विस्पष्टमुल्लेखात्।(यदत्र 'राजमृगाङ्क संज्ञकम्' इति विशेषणमात्रं प्रयुक्तं न पुनर्ग्रन्थमिति विशेष्यं योजितं तत्तु वामनकाव्यालङ्कारसूत्रग्रन्थे वर्तमानस्य 'विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ' ५.१.१० इति सूत्रस्य वृत्तावुद्धृतेन 'निधानगर्भामिव सागराम्बराम्' इति वाक्यभागेन समानयोगक्षेम्।) एतस्यायुर्वेदग्रन्थस्यान्ते पुष्पिकायाः ग्रन्थनामलेखनस्थले वास्तविकमस्याभिधानमजानानो लिपिकरः प्रमादाद् भ्रान्तेर्वा 'राजमृगाङ्क' इति शब्दं लिखितवान्।मातृकासु लिपिकरैः क्वचिद् ग्रन्थ-ग्रन्थकार-नाम्नामुल्लेखे प्रमाद्यते।नटराजशास्त्रिणा संपादितो ग्रन्थस्तु भोजेन रचितो राजमृगाङ्को न।

१९.तत्त्वप्रकाशः(शैवदर्शनम्।९५ आर्याछन्दोनिबद्धैः पद्यैरत्र

---

१.'भकारः कुम्भकर्णे च भकारश्च विभीषणे।तयोर्ज्येष्ठे कुलश्रेष्ठे भकारः किं न विद्यते' इति श्लोको भोजप्रबन्धगतः ।

तत्त्वविषयो निरूपितः।)

२०.राजमार्तण्डः(योगशास्त्रम्।एतस्यां नामपट्टिकायां द्वितीय-सप्तदशाभ्यां राजमार्तण्डाभ्यां भिन्नतमोऽयं ग्रन्थो यः पातञ्जलयोग सूत्राणां वृत्तिः।टीकाकृत्स्वसमाधानमभिदधत् प्रसिद्धमिदं पद्यमत्रत्यमेव-

''दुर्बोधं यदतीव तद्विजहति स्पष्टार्थमित्युक्तिभिः
स्पष्टार्थेष्वतिविस्तृतिं विदधति व्यर्थैः समासादिभिः।
अस्थानेऽनुपयोगिभिश्च बहुभिर्जल्पैर्भ्रमं तन्वते
श्रोतॄणामितिवस्तुविप्लवकृतः सर्वेऽपि टीकाकृतः॥'')

२१.विद्याविनोदकाव्यम्(अध्येतद्विषयं विवरणं नोपलब्धं मया।अत्र विद्याविनोद इत्येष शब्दो बिरुदमिति स्पष्टम्।)

२२.विश्रान्तविद्याविनोदः(आयुर्वेदः।एतस्य विषये किमपि परिचयादिकं नोपलब्धम्।)

२३.आदित्यप्रतापसिद्धान्तः(ज्यौतिषम्।एतस्य विषये किमपि परिचयादिकं नोपलब्धम्।अत्रापि पूर्वग्रन्थनामवत्-आदित्यप्रताप इति भोजस्य बिरुदं प्रतीयते।)

२४.नाममालिका-(कोषः।केवलं ३१३ श्लोकैः स्वर्गादिनाम-धेयप्रकरणं गगनादिनामधेयप्रकरणं भूम्यादिनामधेयप्रकरणं चेति त्रिष्वध्यायेषु विभज्य शब्दा अत्र संकलिताः।प्रत्यध्यायान्ते पुष्पिकासु नाममालिकेति शब्दसंग्रहरूपस्यास्य कोषस्य नामाभिधीयते तथा अहिराजः संग्रहीतेति चोच्यते।एतस्य शब्दसंग्रहस्यान्ते 'भोजनिघण्टुश्च समाप्तः' इति वाक्यमप्यस्ति।'अहिराज इति नाम्ना निर्दिश्यमानो

भोज एव' इति संपादकौ एकनाथदत्तात्रेयकुलकर्णि-वासुदेवदामोदर गोखलेकौ यद् वदतस्तत् सम्यक्। एकेन ग्रन्थकर्त्रा विरचितेषु सर्वेषु ग्रन्थेषु समानः स्तरो नान्वेषणीयः। तस्मादस्याः शब्दसंग्रहत्वरूपधर्मवत्याः कृतेर्भोजरचितत्वं न सन्देग्धव्यमित्यास्माकीना दृक्।

२५.शालिहोत्रम्(१३८ पद्यैः- १२९ आनुष्टुभैः श्लोकैः १ उपेन्द्रवज्रापद्येन ६ उपजातिपद्यैः २ शार्दूलविक्रीडितपद्याभ्यां- केषुचन स्थलेषु द्वित्रगद्यवाक्यैश्च रचितः अश्वायुर्वेदः। अत्रेमे विषयाः- अश्वदेहवर्णभेदेन तदभिधानभेदः, अश्वदेहगतरोमावर्तभेदेन तेषामुत्तमा धमत्वनिर्णयः, अश्वप्रमाणम्, अश्वगतेर्वेगसिद्ध्यर्थं प्रतिदिनं तस्य धावनमावश्यकं वेगहीनस्याश्वस्य निष्प्रयोजनत्वादित्युपदेशः, सादी यावच्छक्ति कशां नोपयुञ्जीत अपि च उच्चावचे सप्रस्तरकण्टके च पथि अश्वं न धावयेदिति देशना, अश्वबाह्यचिह्नैरश्वरोगज्ञानं, कदाचिद् रक्तमोक्षणस्यानिवार्यता, कस्मिन् ऋतौ किंलक्षण आहारो दातव्यः,क्षुत हेतूनां विविधानां नस्यानां प्रयोगस्तेषां प्रयोजनं च, विविधधान्यादि निर्मिताः पिण्डास्तेषाम् अश्वैर्भक्षणे कारिते प्रयोजनानि, मन्दुराया अर्थादश्वशालाया वर्णनं च।)

स्वनाम्ना ग्रन्थाभिधानकरणे न काऽपि वैचित्रीति प्रोक्तपूर्वम्। शालिहोत्राभिधानेन शालिशूर्पाख्यप्रदेशवासिना प्रणीतस्याश्वायुर्वेदस्य नाम शालिहोत्रमिति। क्रमेण शालिहोत्राश्वायुर्वेदशब्दौ पर्यायत्वेन कैश्चिद् गृहीताविव।

२६.कोदण्डमण्डनम्-(धनुर्वेदः। आनुष्टुभैः श्लोकै रचितः।

कोदण्डमण्डन इति बिरुदं भोजस्येत्यधुना करबदरायितम्।कोदण्डमण्डन ग्रन्थस्य कोऽपि भागः पूर्वमस्माभिर्दृष्टो विद्योदयापत्रिकायां मैसूरवीये प्राच्यविद्यासंशोधनालये कार्यं कुर्वाणैः।उपचत्वारिंशत् पद्यानि वीक्षितानी तीवास्फुटं स्मरणं नः। कोऽपि धन्यजन्मा संस्कृतज्ञो जनोऽध्येतद्विषयं संशोधनं क्रियादित्याशास्महे।)

२७.त्रिभुवननारायणः-एतन्नामा कोऽपि ग्रन्थो भोजरचितत्वेन न श्रुतः।परन्त्वेतद्बिरुदं भोजस्यासीदिति ज्ञातम्।तस्माद् भोजेनैतन्नामकं कमपि ग्रन्थं विरचितवता भाव्यम्।

अवसितः परिचयो भोजविरचितानां ग्रन्थानां सयुक्तिकल्प तरूणाम्।अवशिष्टस्तु परिचयो भोजस्यैव।

केषाञ्चन प्राचीनानां ग्रन्थानां शिलालेखानां चावलम्बनेन संशोधकैर्जनैः प्रतिष्ठापितानां भोजविषयाणामेष ह्रसीयान् सारः-

भोज आसीत् परमारवंश्यो राजा यो मालवदेशं शशास (क्रि.श.१०१०-१०५५)यस्य च राजधानी धारानगरम्।केषुचन ग्रन्थेषु ‘मुञ्जराजाख्यो भोजपितृव्यः भोजं हन्तुं प्रायतत, भोजायासूयन् अनिच्छंश्च तं नृपीभवन्तं द्रष्टुं ;परन्तु पश्चात्तप्तः सन् स्वयं तस्मै राज्यमदात्’इत्युक्तम्।अत्र कियत्या मात्रया श्रद्धातव्यमिति चिन्त्यम्। सिन्धुराजाख्यस्य भोजपितुर्मृत्योरनन्तरं भोजो राजा बभूवेत्यत्रैव शासनलेखानामस्त्यङ्गीकारमुद्रा।मुञ्जः प्रायो ज्येष्ठपितृव्य आसीद् भोजस्य।इम्मडि(=द्वितीय)तैलपाख्येन राज्ञा योद्धुं प्रस्थितो मुञ्जराजः स्वानुजे सिन्धुराजे राज्यं समार्पयत्, युद्ध्यंश्च मृतः।

गुर्जरमध्यप्रदेशराजस्थानमहाराष्ट्रेषु भोजसंबद्धाः शिलालेखा उपलब्धाः। लाटदेशस्य चालुक्यास्तेन पराजिताः परन्तु कल्याणी चालुक्यैः स स्वयं पराजयत। प्रायः स कलिङ्गदेशाधिपतिमिन्द्रनाथं पराजापयितुं साहाय्यम् अकरोद् राजेन्द्रचोलाय।

एतदन्तरे तुरुष्कवंशीयो मोहम्मद् घस्नी भारतस्य केषुचन प्रदेशेषु प्रारभताक्रमणम्। मोहम्मद् घस्निना साक्षाद् युद्धं भोजो नाकरोत्। केषुचन युद्धेषु जयं केषुचन युद्धेषु च पराजयमनुभूतवान् भोजः। कर्णाख्यो राजा भीमनामधेयेनापरेण राज्ञा स्नेहं प्राप्य मालव माक्रामत्। एतदन्तरे केनचनाचिकित्स्येन रोगेण ग्रस्तो भोजो मृतः।

धारानगरे भोजेन विद्याप्रसाराय काचिच्छाला स्थापिता यस्या भोजशालेति संज्ञा। अत्र संस्कृतेन प्राकृतेन च रचिता नैके शिलालेखा उपलब्धाः। केचन मुस्लिम्-अधिकारिभिस्तत्पार्श्वे स्वसंप्र-दायानुगुणानि वास्तूनि निर्मितानि येनाधुनापि तत्रार्याणां मुस्लिमानां च परस्परेण संघर्षः प्रचलति। आर्यैस्तत्र प्रतिमंगलवासरं सांप्रदायिका आचारा अनुष्ठीयन्ते मुस्लिम्मतानुयायिभिश्च प्रतिशुक्रवासरम्।

भोजः कोङ्कणदेशं यदा स्वकरस्थमकुरुत तदा निजविजयसंतुष्ट-मनाः सन् ब्राह्मणेभ्योऽग्रहारद्रविणादीनि भूरिशो व्यतरत्। एतदेव प्रायशो मूलं बल्लालसेनस्य भोजप्रबन्धे प्रोतानां कथाकम्बलानां, पौनःपुन्येन लिखितस्य 'प्रत्यक्षरं लक्षं ददौ' इत्यस्य वाक्यस्य च।

# ९.शार्ङ्गधरपद्धतिः

शार्ङ्गधरपद्धतिः शार्ङ्गधराख्येन साहितीकारेण भावुकानां रसोत्सवाय सङ्गृहीतानां परमोत्कृष्टानां पद्यानां सञ्चिः।सुभाषितानि, अन्योक्तयः, स्वभावोक्तिकरम्भितानि वर्णनानि, रसोदाहरणानि च ग्रन्थेऽस्मिन्नामूलचूलं योजितानि।अत्रत्यान्युदाहरणान्यन्यकृतान्येव प्रायः। शार्ङ्गधरीयाणि पद्यानि विरलानि।२६३ परिच्छेदैरथ च ४६२० पद्यै श्च समुपेतो बृहन् पद्यकोशोऽयम्।६३०० पद्यानि मूल आसन्निति स्वयं ग्रन्थं कर्त्रा ज्ञापितम्।अर्थादधुना या शार्ङ्गधरपद्धतिरस्माकमुपलब्धा तत्र केचन भागा लुप्ताः।

शार्ङ्गधरपद्धतिं रचयिता शार्ङ्गधरो हम्मीरभूपतिराजगुरोः राघवाख्यस्य विदुषः पौत्रः, दामोदराख्यस्य विदुषः पुत्रश्च।हम्मीर भूपतिः क्रि.श.१३६३ ईसव्यां राजाऽऽसीदिति विज्ञायते[१]।

विश्वकोशत्वमन्वेषमाणां दृष्टिमवष्टभ्य यदि विचारः प्रस्तूयते, अत्रत्यानां परिच्छेदानां मध्ये केचन कुतूहलाधिक्यमुन्मीलयन्तितमाम्। ते नाम्नाऽत्र कीर्त्यन्ते-

७५-७७.राजनीतिः।७८-७९.अश्वगजयोः प्रशंसा।८०.धनुर्वेदः।८१.सङ्गीतशास्त्रम्।८२.वृक्षायुर्वेदः।८३.शकुनज्ञानम्। ८४.पशु

---

१. *Subhāṣita, Gnomic and Didactic Literature* by Ludwik Sternbach (*A History of Indian Literature* vol. 4 part. I ed. by Jan Gonda) Otto Harrassowitz Wiesbaden 1974

चिकित्सा।८५.विषापहरणम्।८६.उन्मादचिकित्सा।८७.कौमारभृत्यम्। (शिशुरोगचिकित्सा।)८८.चमत्कारिकाः काश्चन विशिष्टाश्चिकित्साः। ८९.सर्वरोगनिवारकाणां दैहिकारोग्यजनकानां च रसायनानां निर्माणक्रमः। ९०.केशकार्ष्ण्यार्थं खल्वाटत्वनिवारणार्थं च कर्तव्या उपायाः।१५५-१६३.जीविनां सृष्टिविचारः, योगशास्त्रम्, मनःस्थिरीकरणोपायाः, अरिष्टानि (मरणस्य पूर्वानुमानसंपादकानि चिह्नानि) च।

एतेषां मध्ये केचन विचाराः स्वयं संशोधनेन शोधिता इति, केचन तु विचाराः अपरेषां ग्रन्थानां साररूपा इति स्वयं ग्रन्थं रचयित्रैव स्फुटीकृतम्।संस्कृतज्ञानामपि धनुर्वेदादयोऽध्ययनयोग्या एवेत्येतेन सुविस्पष्टायते।नवीनैरपि विद्वद्भिः संस्कृतेन ग्रन्था विविधविषयका रचनीया एव, तत्र न कोऽपि दोषः समस्तीति शार्ङ्गधरेण संदिष्टमिव।

## १०.(राज)मानसोल्लासः/अभिलषितार्थचिन्तामणिः

कल्याणचालुक्यवंशपरंपरीयो राजा तृतीयसोमेश्वरः क्रि.श. ११२६-११३९ वर्षेषु राज्यधुरामवहत्।षष्ठस्य विक्रमादित्यस्य पुत्रोऽयम्। एतस्य ‘भूलोकमल्लः’,‘त्रिभुवनचक्रवर्ती’,‘सर्वज्ञचक्रवर्ती’ति च त्रीणि बिरुदान्यासन्।एतस्य पत्न्यौ द्वे-एक्कलदेवी बर्मलदेवी च।इम्मडिजगदेक मल्लः, मुम्मडितैलप इत्याख्यौ द्वावास्तामस्य पुत्रौ।११३९ ईसव्यामेष निधनं गतः।

अस्माकं ज्ञानानुसारेण द्वावदसीयौ ग्रन्थौ-विक्रमाभ्युदयचम्पू

र्मानसोल्लासश्च।असमग्र एवोपलभ्यते प्राथमिकः। परन्तु यावदुपलब्धो भागः सोऽप्यमूल्य एवेत्यैतिहासिकानां धारणा।

द्वैतीयीक एव प्रसिद्धो (राज)मानसोल्लासः।अस्य रचनाया आरम्भः क्रि.श.११११९ ईसव्यां संजातः।

(राज)मानसोलासो विंशतिनामकेषु प्रधानेषु पञ्चखण्डेषु रचितः।अतीव प्रथीयस्यस्मिन् ग्रन्थे ८०००पद्यानि वर्तन्ते।ग्रन्थकर्तुरभि प्रायानुसारेण ग्रन्थोऽयं ‘‘जगदाचार्यपुस्तकं’’, ‘‘कामधेनुरिदं शास्त्रं’’च। साभिमानं च ‘‘नास्त्यनेन समं शास्त्रं सर्ववस्तु प्रकाशने’’ इति ब्रूते सः।

अत्रत्यानां विषयाणामनुक्रमणिका एवंप्रकाराऽस्तिः-

प्रथमा विंशतिः- राज्यप्राप्तिहेतूपायकथनं, परनिन्दापरद्रोहा सूयादिदुर्गुणानां वर्जनं, व्यावहारिकाणां सद्गुणानां प्राप्तये राजभ्य उप-देशनाश्च।

द्वितीया विंशतिः-समग्रा राजनीतिः।

तृतीया विंशतिः-वास्तुगृहभेदाः।चित्रनिर्माणविधानं, विविधानां देवताकृतीनां वर्णनम्, सुगन्धद्रव्यै राज्ञां स्नपनक्रमः, स्पर्शसुखानां पादुकानां वर्णनं, स्वादिष्ठानां ताम्बूलानां निर्माणं, सुगन्धद्रव्यानां रचना, अमूल्यानां विशिष्टानां च  वस्तूनां विवरणं,माल्यानाम् आभरणानां च निर्माणं, विविधानि राजोपवेशनार्हाणि पीठानि, राजसभोचिता आचाराः, शिशूनां लालनस्य पालनस्य च क्रमः,तेषां विद्याभ्यासः,तेषां विवाह

योग्यानां सतां विवाहः,पाकाः, पानीयद्रव्याणि, भोजनानन्तरं पादप्रक्षालनार्थं सुगन्धि जलं, देहहिताः मृदुलाश्च शय्याः,कामशास्त्रप्रतिपाद्यानां विषयाणां संक्षिप्ता सूचना।

चतुर्थी विंशतिः-प्रमोदविनोदकथनम्, अनेकविधानां शस्त्राणां प्रयोगः, अलंकारशास्त्रं, कुक्कुटयुद्धं, मल्लयुद्धं, अनेकपक्षिभिः प्रशिक्षितैः परस्परेण युद्धं कारयितुम् उपायाः,संगीतं, नृत्यं च,बाह्याः क्रीडाः, आभ्यन्तर्यः क्रीडाः,कामशास्त्रं च।

ग्रन्थोऽयं मैसूरवीयात् सर्वकारीयहस्तप्रतिग्रन्थभण्डारात् (अधुना प्राच्यविद्यासंशोधनालय इति परिवर्तितनामधेयात्)१९२६ ईसव्यां प्रथमतोऽसमग्रं प्रकटित आसीद् अभिलषितार्थचिन्तामणिरिति नाम बिभ्राणो यस्य संपादको डा.आर्.श्यामशास्त्री।ततो वटोदरीयात् प्रसिद्धात् प्राच्यविद्यासंशोधनालयात् त्रिषु संपुटेषु समग्रं प्रकटितो यस्य संपादकः श्री.जि.के.गोण्डेकर्।(१९२५, १९३९, १९६१)

छन्दांसि परिचाययन् सोमेश्वरो मराठी-कन्नडगता अपि काश्चन च्छन्दोगतीः परामृशतीति कौतुकाधिक्यं जनयन् विशेषः।

## ११.साम्राज्यलक्ष्मीपीठिका

आकाशभैरवतन्त्राख्यस्य तन्त्रग्रन्थविशेषस्य भागमात्रमात्मानं कथयन्ती कृतिरियं साम्राज्यस्य समीचीनेन क्रमेण निष्क्लेशं निर्वहणार्थं देव्याः साम्राज्यलक्ष्म्याः आराधनां परिचाययति।सहैव राज्ञाऽवश्यं

ज्ञातव्या अपि विषयाः सुविस्पष्टया स्वच्छया परमोन्नतस्तरीयया च भाषया प्रतिपादयति।१३८ पटलेष्वनुष्टुप्छन्दसि निबद्धैः ३८५४ पद्यै रचितोऽयं ग्रन्थः।तत्र तत्र दृश्यमानं काव्यत्वरूपधर्मवत्त्वं पठितॄणां मानसमावर्जयति।

तञ्जावूरुसरस्वतीमहालयादयं तन्त्रग्रन्थः महालयस्थाभ्यां द्वाभ्यां पण्डिताभ्यां के.वासुदेवशास्त्रि-क्षे.शं.सुब्रह्मण्यशास्त्रिभ्यां संपादितः, एन्.वि.वेङ्कटसुब्रह्मण्यशास्त्रिणा रचितया संक्षिप्तया भूमिकयाऽथ च विस्तृतया च विषयानुक्रमणिकया समुपेतः १९५२ ईसब्यां प्रकटितः। के.वासुदेवशास्त्रिणा इङ्ग्लीष्भाषया विरचिता पीठिकाऽपि योजिता-ऽऽदौ।

यद्यपि संपादकाभ्यां ग्रन्थस्यास्य रचनाकालो नाभ्यूहितः परन्तु ग्रन्थोऽयं नातीवप्राचीन इति प्रतिभाति।कञ्चित् कालं तञ्जावूरुप्रदेशो महाराष्ट्रीयै राजभिः शासित इति तु सुविज्ञात उदन्तः। प्रकृतस्य ग्रन्थस्य मातृकासु महाराष्ट्रीयानां केषाञ्चन राज्ञां नामधेयानि लिखितानीति के.वासुदेवशास्त्री इङ्ग्लीष्भाषया रचितायां पीठिकायां ज्ञापयति।'एतेन महाराष्ट्रीया राजानः सश्रद्धमेतं ग्रन्थमधीयते स्मेति ज्ञायत' इति तत्रभवतोऽभ्यूहः।केवलं केषाञ्चन नाम्नां मातृकासु लेखनमेवंभूतेऽभ्यूहे कथं प्रमाणपदवीमारोढुं शक्नुयादित्यत्र तत्रभवानेव प्रमाणम्।परन्तु ग्रन्थोऽयं प्रायशः चतुर्दशात् क्रैस्तवीयाद् शकादनन्तर एव काले केनापि तन्त्रानुष्ठाने निष्णातेन राजकीये व्यवहारे वैदुष्यजुषा, लौकिकीसु कासुचन कलासु च प्रावीण्ययुजा केनापि पण्डितेन रचित

इति स्वभ्यूह्यो विषयः।

अत्र नवरात्र्युत्सवस्य विजयदशम्युत्सवस्य गजाश्वपूजनस्य च विस्तरेण वर्णनाद् ग्रन्थस्यास्य विजयनगरराजानां च मध्ये कोऽपि संबन्धोऽवर्ततेति स्वनुमेयम्। तञ्जावूरुनगरे ग्रन्थस्यास्य प्रकटितत्वात् तमिळुभाषायां प्रायोऽमुं ग्रन्थमधिकृत्य संशोधनग्रन्था अधिकतरा रचिताः स्युरिति संभाव्यते।

एतस्मिन् ग्रन्थे प्रत्यध्यायसमाप्ति "इत्याकाशभैरवाख्ये महाशैव तन्त्रे साम्राज्यलक्ष्मीपीठिकायां" इति पुष्पिकावाक्योपक्रमोऽस्ति। मैसूरवीये प्राच्यविद्यासंशोधनालये "आकाशभैरवकल्प" नाम्नी काचित् कृतिर्द्वयोर्मातृकयोः समुपलभ्यते।प्रथमा मातृका ग्रन्थलिप्या तालपत्रेषु लिखिता(B.646)।द्वितीया च कन्नडलिप्या कागदेषु लिखिता (P.2592)।अत्र तन्त्रत्वरूपो धर्मः सुविस्पष्टो विश्वकोशात्मकत्वरूपो धर्मस्तु न दृग्गोचरः।तञ्जावूरुप्रकटितायाः कृतेराधारमातृकाणां मैसूरवीयप्राच्यसंशोधनलायस्थयोश्च मातृकयोः संबन्धो दवीयानपि नास्तीति स्पष्टम्।सामग्रीसंकलने भूयान् व्यत्यय उभयीषां स्फुटः। तञ्जावूरुसरस्वतीमहल्गता साम्राज्यलक्ष्मीपीठिका पार्वतीपरमेश्वर संवादरूपा।मैसूरुप्राच्यविद्यासंशो धनालयस्थयोर्मातृकयोर्लिखित आकाशभैरवकल्प 'उमामहेश्वरसंवादरूप' इति सर्वेषां पटलानामन्ते पुष्पिका गृणन्तीत्यन्यदेतत्।उभयोः सत्यपि पर्यायित्वे अन्या च तञ्जावूरुमातृकाऽन्या च मैसूरुमातृकेत्यवगन्तव्यम्।

ग्रन्थोऽयमुपक्रमे साम्राज्यलक्ष्म्याः स्वरूपं, तत्परिवारान्, तदनु

ग्रहार्थमनुष्ठेयं मन्त्रजपादिकं विस्तरशो वर्णयति। तदनु साम्राज्यस्य याः पीडा नैसर्गिक्यः-रोगबाधा,उत्पाता इत्यादयः तन्निवारणार्थ-मनुष्ठेयानि पूजादिकानि दर्शयति।

कृतेरस्याः स्वारसिका भागाः अग्रे वर्तन्ते। राजकीया विविधा विभागाः, दुर्गनिर्माणविधिश्च विस्तरशो वर्णिताः। दुर्गनिर्माणे गिरिदुर्गं प्राधान्यं भजत इति ग्रन्थं रचयितुराशयः। स्थलजलदुर्गादयः समनन्तरं वर्ण्यत्वेनादत्ताः। विविधाः शासकीया विभागाः, नागरं वास्तु, राजसौधः, राजपरिवारः, सांप्रदायिकानि रामनवम्यादीनि पर्वाणि,मृगयाविधिः, सेनापतिचयनं,धनुर्वेदः[1]-एते विषयाः समग्रशो वर्णिताः। राज्ञा अवश्यम् अभ्यसनीयानां कलानां नाम्ना कीर्तनमप्यस्त्यत्र। अस्मिन् प्रघट्टके साम्राज्यलक्ष्मीपीठिकागतानां विषयाणां यत् परिचायनं कृतं तत्तु केवलमत्र पातितो वैहङ्गमः कटाक्षः।

पश्यामाधुना समग्रामनुक्रमणिकाम् -

१-५.श्रीमहालक्ष्म्या माहात्म्यं,स्वरूपं,मन्त्रस्वरूपं,यन्त्रस्वरूपं, मन्त्रजपस्वरूपं च। ६-९.श्रीमहालक्ष्म्या मन्त्रजपभेदो,मन्त्रहोमस्वरूपं, मन्त्रहोम-भेदस्वरूपं,आवरणदेवतादिलक्षणं च। १०-३१.श्रीमहालक्ष्म्या पूजाकाले संभवन्त उत्पाताः, महापूजार्थमण्डपनिर्माणं,प्रतिमास्थापना, षोडशोपचारपूजामन्त्रस्वरूपं,महापूजाङ्गत्वेन दानं, महाशान्तिः,तदर्थस्य मण्टपस्य स्वरूपम्, तदङ्गत्वेन वास्तुहोमग्रहयज्ञादिक्पालहोमाः,

---

१.धनुर्वेदविषयकमत्रत्यं पटलद्वयं समग्रं दत्तमस्मिन् ग्रन्थे परिशिष्टत्वेन

नानाविधाः शान्तयः(उत्पातदोषहर्यः, अपशकुनसूचितफलहर्यः, दुस्स्वप्न दोषहर्यश्च),नानादेवतोत्सवाः, साम्राज्यलक्ष्म्याः पूजाश्च।३१-अष्टविधाः दुर्गाः, वर्जनीयगिरिदुर्गाः वनदुर्गाद्यष्टविधा दुर्गाः,अष्टविधकोष्ठदुर्गाश्च। ३५-३८.उपसालाः,सालद्वारं,सालवप्रनिर्मातिव्यगृहाष्टकं, सालसंस्थापनीय वस्तुस्वरूपं च।३९. पुरनिर्माणं ४०. आस्थानमण्टपादिनिर्माणम्। ४१.नवरङ्गादिकूटनिर्माणम्। ४२.अन्तःपुर-निर्माणम्। ४३.नूतनराजगृह प्रतिष्ठा।४४-४६.सिंहासननिर्माणम्,सिंहासन-प्रतिष्ठाविधिः, सिंहा सनारोहणविधिश्च।४७-५१.नृपपट्टाभिषेकाङ्गत्वेन मण्डपनिर्माणम्, आचार्यर्त्विग्वरणं,सम्भारसंपादनं,होमविधिः,पूजा,अभिषेकश्च। ५२.नृपा भिषेकप्रकारः।५३.नृपपट्टबन्धः।५४.नृपपट्टाभिषेकाङ्गं दानम्। ५५.पुरा तननृपपट्टाभिषेकप्रकारः।५६-५९.नृपनैमित्तिकाभिषेकार्थं मण्डपकुण्ड वेदिकानिर्माणम्, आचार्यर्त्विग्वरणं, कलशस्थापनं, दिक्पालपूजा च। ६०-६१.अभिषेकसंरभः, अभिषेककालिककर्माणि ६२.नृपनगरप्रवेशः। ६३.द्विसप्ततिराज्याङ्गानि(विविधकर्मसु कुशला अत्र राज्याङ्गानीत्युच्यन्ते)। ६४.चतुषष्टिकलाः। ६५.राजकृत्यम्। ६६.सम्राजः शुभानि लक्षणानि। ६७.राज्यार्हा राजगुणाः।सामान्यराजानां गुणाः, राजमहिष्याश्च दैहिकानि लक्षणानि गुणाश्च। ७०.राजधर्माः।७१-७४.प्रत्यहमाप्रातः राज्ञाऽनुष्ठेयानि कर्माणि।७५.कविबुधगायकैः सह संभाषणम्। ७६.मन्त्रिभिः सह मन्त्रालोचना।७७.आमध्याह्नं राज्ञा कर्तब्या समा लोचना। ७८.भोजनवैभवम्।७९.सायंतनात्परं राज्ञा कर्तब्यानि कर्माणि, ८०.लास्यदर्शनम्।८१.ज्योत्स्नाविहारः।८२.संवत्सरारम्भ उत्सवाः।

८३.मल्लयुद्धलास्यादिदर्शनम्।८४-१०५.रामनवमीव्रतनवरात्रीव्रतादि सांप्रदायिकानि कर्माणि राजधर्मोपदेशाश्च।१०६-१०७.गजाश्वपूजादिकं, नानाविनोदाश्च।१०८-१११.विजयदशम्युत्सवः, नवरात्र्युत्सवः, तदङ्गत्वेन शमीपूजा,कुमारीपूजा इत्यादिकम्।११२-११५.नरकचतुर्दशी, दीपावली, विष्णुध्वजव्रतं च ११६-१२१.धनुःपौषमाघमासेष्वनुष्ठेयाः सांप्रदायिका आचाराः, शिवरात्रिव्रतं च।१२२-१२४.भारतपौर्णमासीव्रतं, फाल्गुन मासकर्तव्यं, पुण्यकालिकं दानम्।१२५-१२७.तीर्थयात्रा, तत्संकल्पः, तत्कालिकदानं, तत्फलमित्यादि।१२८-१२९.दण्डयात्रारम्भेऽनुष्ठेया आचारा दण्डयात्रा च।१३०.मृगया।१३१.रथनिर्माणम्। १३२.गजोत्पत्तिः।१३३.अश्वोत्पत्तिः।१३२४.पदातिः।१३५.चापाद्यायुधानि। १३६.धानुष्कश्रमाभ्यासः।१३७.युद्धस्वरूपम्।१३८.वीरगतिः।१३९.साम्राज्य लक्ष्मीस्तुतिः।

## १२.शिवतत्त्वरत्नाकरः

शिवतत्त्वरत्नाकराख्योऽयं महाकोशः केळदीसंस्थानीयस्य राज्ञो हिरिय(=ज्येष्ठ)बसवप्पनायकस्य कृतिः।अयं राजा क्रैस्तवीये शके १६७८ तः १७१५ पर्यन्तं शास्ति स्म।विविधविषयसंबद्धानां सुभाषितानां बृहत्परिमाणकं संकलनमपि कृतवानेष राजा।“सुभाषितसुरद्रुम”नाम्ना अभ्यधात् संकलनमिदं यत्र रामायणादिग्रन्थेभ्य समुद्धृतेषु पद्येषु बाल्य-कौमार-यौवन-वार्धकावस्थायुजां तथा मुमुक्षूणां प्रयोजनकराः

सुगन्धाः ५ स्कन्धेभ्यः, ३५ स्तबकेभ्यः, ४९६ कुसुमेभ्यः, १४७४७ पद्येभ्यश्च प्रसारिताः। "नीतिसुधाकरा"ख्योऽपरोऽपि ग्रन्थोऽदसीयैव रचना। एतेषां मध्ये प्रकटितचरस्तु शिवतत्त्वरत्नाकर एक एव।

शिवतत्त्वरत्नाकरोऽयं कल्लोलनामकैर्बृहत्खण्डैरथ च तरङ्गाख्यै-रवान्तरखण्डैस्तथा अष्टादशाध्यायैश्च रचितः। केळदीराजवंश्यानां चरितं विविधान् विषयांश्च हिरियि(=ज्येष्ठ)बसवप्पनायक-सोमशेखर नायकयोः संवादव्याजेन संगृह्णतीयम् अद्भुता रचना विश्वकोशकोटौ समावेशनमर्हतीत्यत्र न संशयकणिका। सोमशेखरः स्वकीयस्य वंशस्य विचारान् पृच्छति। पिता हिरियि बसवप्पनायकश्च उत्तरयति।

विन्यास एतादृशे क्लेशस्तु विविधैः शास्त्रीयैर्विषयै राजवंश्यानां चरितस्य संकरोऽन्तर्गडुभूत इव। अपेक्षितविषयाणामस्तव्यस्ततया व्यामिश्रितत्वादप्रासंगिकतादोषं परिहर्तुं न शक्यते। वस्तुतस्तु ग्रन्थेऽस्मिन्नपि तथैव संजातम्। तथापि केषुचन भागेषु सत्यपि राजवंश चरितविविधविषयाणाम् ओतप्रोतत्वे युगपदेवोभयेषां योजने ग्रन्थं कर्ता साफल्यम् अविन्ददिति सुधीरं वक्तुं प्रभवामः। यथा-

दोड्डसंकण्णनायकस्तीर्थक्षेत्राणां संदर्शनं कर्तुं दिल्ल्याम् "अङ्कुश-खान"-नामकं पराजयतीति हिरियिबसवप्पनायकः सोमशेखरं वक्ति। (अयं वृत्तान्तः कुतूहलमत्यन्तमेव जनयति)। चरित्रमेतच्छ्रोता सोमशेखर नायकः खड्गविचारान् बोधयितुं विज्ञापयति। तत्कुतूहलं शमयितुं बसवप्पनायकः खड्गानां प्रभेदान् ज्ञापयति तम्।

केळदीराजवंश्यानां समग्रं चरित्रमत्र पौनःपुन्येन समायाती

त्युक्तपूर्वम्। राजवंश्यानां चरित्रं प्रतिपादयन्त्येतादृशानि पद्यान्येकत्र संपुज्य कन्नडानुवादेन साकं तत्संपादनं कृत्वा श्लाघ्यं कर्माचरितवान् तत्रभवान् विद्वान् एम्.एस्.बसवराजय्यः[१]।क्रैस्तवीयायां २०-८-१७०८ तिथौ शिवतत्त्वरत्नाकरस्य तथा क्रैस्तवीयायां ३-१२-१७११ तिथौ सुभाषितसुरद्रुमस्य च रचना समाप्तेति, अधुनाऽपि केळदीराजवंश्या जना वर्तन्ते चेत्यादयः कुतूहलं वर्धयन्तो विषयास्तत्रभवता संपादितेन शिवतत्त्वरत्नाकरस्थेन केळदीराजवंश्यचरित्रभागेन बुद्ध्यारूढा भवन्ति।

शिवतत्त्वरत्नाकरः संकलितैर्वस्तुभिरलङ्कृतो ग्रन्थविशेष इति ज्ञापितपूर्वम्। ग्रन्थकर्ता सर्वेषामपि कल्लोलानामन्ते मूलग्रन्थान् नाम्ना कीर्तयतीति विशेषतोऽवधातव्यम्।

अधुनाऽत्र संकलितानां विषयाणां स्थूलाऽनुक्रमणिका दीयतेः-

शैवदर्शनं, वेदान्तो, ज्यौतिषम्, आयुर्वेदो, धनुर्वेदः, पौराणिकानां श्रद्धानुसारेण भूगोलस्य वर्णनं,पुराणपरिचयः, सृष्टिः, ब्रह्माण्डवर्णनं, बसवेश्वरवृत्तान्तः, कलियुगधर्मः, वयःस्तम्भनादिसिद्धयः, अरिष्टानि (मरणस्य पूर्वानुमानानि),निधिप्राप्तयेऽनुष्ठातव्यास्तान्त्रिकाः क्रमाः, राज्य-धर्माः, शकुनानि, कर(Tax)विचारः,युद्धे जयहेतूनि साम्प्रदायिका-न्यनुष्ठानानि, शिल्पशास्त्रं, राजनीतिः, युद्धक्रमः, संगीतं, नाटकं,

१.केळदिराजवंशतरङ्गिणि। (सकन्नडानुवादा)सं.विद्वान् एम्.एस्.बसव-राजय्यः। गुरुकुलप्रकाशनं तिपटूरु-५७२२०२।२००५

नृत्यं, कामशास्त्रं सुगन्धद्रव्यनिर्माणक्रमः, रत्नशास्त्रं, रसायुर्वेदो, विषचिकित्सा, अलंकारस्वरूपं, नाट्यशास्त्रं, गजायुर्वेदः,अश्वायुर्वेदो, हठयोगो,ऽधिकरणेषु (Courts)प्रचाल्यमानानि कार्याणि,मल्लयुद्धं, कुक्कुटलावकादिभिः कार्यमाणानि परस्परेण युद्धानि,वीरशैवाना माचाराः, षड्दर्शनानामथ चावैदिकानां दर्शनानां निरूपणं च ।ग्रन्थस्य समग्राणां विषयाणां नानुक्रमणिकेयमिति, केवलं दिग्दर्शनमात्रमिति च ज्ञेयम्।

इतः पूर्वं वर्णितेषु सर्वेषु विश्वकोशेषु उद्धृतान् भागान् विना ग्रन्थकर्तृभी रचिता भागाः पद्यमयाः।इत ऊर्ध्वं तु गद्ये रचिता विश्वकोशा निरूप्यन्ते।

## १३.हंसविलासः।

हंसविलासो वस्तुतस्तन्त्रग्रन्थः।एतं रचयिता हंसमिट्टुर्गुर्जरीयः। अस्य जन्मतिथिरपि निश्चताऽस्ति यथा-वैक्रमाब्दे १७९४वर्षे (क्रि.श.१७३७)फाल्गुणपञ्चदश्यां जातोऽयम्।एतदीयस्य वैयक्तिकस्य जीवनस्य द्वित्राणि चरित्राण्येवम्प्रकाराणिः-

पिताऽस्य कृपारामः, माता च सूरीनाम्नी। जन्मनाम च मिट्टु।अयं सामवेदी।पञ्चवर्षः सन् प्रापितोपनयनसंस्कारोऽयं गायत्रीदेव्या अनुग्रहेण शीघ्रतरं सिद्धश्रीविद्याको मिट्टुशुक्लनामकस्य पुत्रीं धूलीनाम्नीम् उपयेमे।संप्राप्तसप्तदशवर्षो जातवैराग्यस्त्यक्तगृहश्चैष काशीं गतवान्।तत्र परमहंसेन केनचिल्लब्धाध्यात्मोपदेशः सन् ‘‘अहं हंसोऽस्मि’’ इति

भावनया संपूरितहृदयः प्रतिन्यवर्तत। स्वपत्नीं वैराग्यपरां विदित्वा सप्रमोदमुपदिदेश तस्या अध्यात्मविद्याम्। ततो धूलि-हंसमिट्ठु-संवाद-रूपस्य प्रकृतस्य हंसविलासनामकस्य ग्रन्थस्य रचनामप्या रब्धवान्।

तन्त्रग्रन्थोऽयमिति ज्ञापितपूर्वम्। परन्तु प्रासंगिकमत्रत्यं वस्तु-वैविध्यं सर्वानपि विस्मयोदधौ निमज्जयति। एवं च विश्वकोशानां मध्ये गणनीयं स्थानमाक्रामत्येतद् ग्रन्थरत्नम्।

हंसी(=हंसमिट्ठोः पत्नी धूली , या दीक्षानन्तरं हंसीति परिवर्तित-नामधेया।)सकौतुकं प्रश्नान् पृच्छति, हंसेन तदुत्तराणि दीयन्ते। अनयैव विधया ग्रन्थस्य विषयाणां क्रमवती गतिः। अत्र गद्यानि पद्यानि च वर्तन्ते। गद्यानि ग्रन्थं रचयित्रैव प्रणीतानि। परन्तु पद्यभागेषु १.अन्यैर्मूलैः संगृहीतानि, २.ग्रन्थं कर्त्रा रचितानि च - एवंप्रकारेण द्वैविध्यं द्रष्टव्यम्।

ग्रन्थकर्तुर्गद्यं प्रसन्नमञ्जुलं चित्ताकर्षकं च। प्रायिकं दैर्घ्यमस्य सर्वत्र गोचरम्। ५२ अध्यायैर्विभक्तोऽयं ग्रन्थः ३२३ पुटेषु मुद्रितः। अधुना अत्रत्येषु विषयेषु कश्चन कटाक्षः पात्यते-

कलियुगलक्षणं, नरकवर्णनं, कपिलोक्तजीविनां वर्णनं, सप्तज्ञान-भूमिकाः, सत्पुरुष-मुमुक्षु-सद्गुरु-सच्छिष्याणां लक्षणं, मीमांसा-योग-न्याय-वैशेषिक-सांख्य-वेदान्तविचाराः,तन्त्रशास्त्रप्रतिपादिताया दीक्षाया विधानं,तान्त्रिका आचाराः,सात्त्विकाः सिद्धान्ताः,विविधानां मन्त्राणाम् उद्धारक्रमाः, जपयोगः, पूजावैविध्यं, छन्दांसि,अलंकारः,

रसलक्षणं,संगीतनृत्यरासादीनां लक्षणानि,ऋतुवर्णनं, कामशास्त्रं, रासयोगश्च।

"अमुकैर्ग्रन्थैरमुका विचारा आदत्ता" इति ग्रन्थकर्त्रैव व्यक्त-मुक्तत्वात्, विचारेऽस्मिन् ऊहापोहस्य कीदृस्यापि नावसरः। आध्यत्मिक एव क्षीरोदधौ निमज्जितवतोऽस्य लौकिकेषु विषयेष्वतादृशं कौतुकं परमेव विस्मयमादधाति।विषयवैविध्यसंपादने ग्रन्थं रचयिता आसन्न त्र्यशीति (८३)ग्रन्थानाम् अधमर्णोऽस्ति।तथापि शास्त्रीयेषु विचारेषु स्वकीयान् अभिप्रायान् तत्र तत्र स्पष्टमभिदधाति।तस्मात् प्राचीनेषु विश्वकोशेषु स्वोपज्ञतां साधितवतां विश्वकोशानां मध्ये परमोत्कृष्टस्तरीय मस्य स्थानमित्यत्र न कोऽपि सचेताः संदेग्धि।

## १४.श्रीतत्त्वनिधिः

मुम्मडिश्रीकृष्णराजओडेयर्केन (१७९४-१८६८)रचितोऽयम् अद्भुतो विश्वकोशः।मैसूरुराजवंश्यानां मध्ये द्वाविंशस्तत्रभवान् मुम्मडी-श्रीकृष्ण-राजओडेयर्महाराजः।एतेन राज्यभारः क्रि.श.१७७४ ईसवीतः क्रि.श. १७९६पर्यन्तं निर्व्यूढम्।इम्मडिकृष्णराजओडेयर्कस्य पुत्रः खासाचामराज-ओडेयर् पिताऽस्य।असमाप्तबाल्यमेव दुर्दैवान्नष्ट मातापितृकममुं राजमाता महाराज्ञी लक्षम्मण्णी वात्सल्येन पोषितवती। पञ्चवर्षो बाल एव सन्नेष (टिप्पुसुल्तान्कस्य मरणानन्तरं) सिंहासनमा

रूढवान्।यदाऽयं षोडशवर्षः समजायत, एतस्य मातामही लक्ष्म्मण्णी दिवं याता।यद्यपि 'दिवान् पूर्णय्या'ख्येन मन्त्रिणा राज्यभारे साहाय्य मेष प्राप्तवान्।परन्तु तस्मिन्नपि मन्त्रिणि १८८२ ईसव्यां दिवं याते सर्वथाऽनाथ इवानुभवति स्म राजा।तथापि एकलः सन्नेव क्लेशेन राज्यधुरां निरवहत्।एतदन्तरे महाराष्ट्रीयाः केचन पीडां जनयामासुः। आर्थिके संकष्टे च पतितवान् राजा।तथापि प्रजावत्सलत्वेन ख्यात आसीदेषः। राज्यभारनिर्वाहसमर्थमपि मुम्मडिश्री-कृष्णप्रभुमधिकारात् प्रच्यावयितुं व्याजान्यन्वेषन्ते स्म ब्रिटिषधिकारिणः।कदाचित् नवरात्र्युत्सव प्रसंगे सिंहासनात् तस्य प्रच्यावनं ज्ञापयदादेशपत्रं हठात् प्रेषितवन्तो ब्रिटिषधिकारिणः। निर्विण्णो राजा १८६८ ईसव्यां निधनमुपगतः।

इदमभ्यूह्यते-शतकोटिनामकं नव्यनायग्रन्थं रचयितरि कुणिगल्-रामशास्त्रिणि मुम्मडिकृष्णराजओडेयर्केनाधीतिना भाव्यम्।मैसूरुनगरं नव्यन्यायमिदंप्रथमतयाऽऽनीतवान् कुणिगल्रामशास्त्रीति प्रायोवादः।

संस्कृतकन्नडोभयभाषापण्डितो भवन्नेष राजा भाषयोरुभययो रपि समृद्धमेव साहित्यजातमसृजत्। आसन्नषष्टिकृतय स्तेन रचिता इत्यभ्यूह्यते।केचिद् ग्रन्था नाममात्रेण ज्ञाताः।उपलब्धानां ग्रन्थानां संख्या त्वल्पैव।

संस्कृते राज्ञाऽनेन विरचितानां ग्रन्थानां (उपलब्धानां नाममात्रेण श्रुतानां च ) सूचिका-

१.गणितसारसंग्रहः।

२.गणेशरत्नमाला।

३.ग्रहणदर्पणः।
४.चामुण्डात्रिशती
५.चामुण्डालघुनिघण्टुः।(कन्नडटीकासमेतः[1]।)
६.देवताध्यानमालिका।
७.नञ्जुण्डशतकम्।
८.महाकोशसुधाकरः।
९.महाविष्णुत्रिशती।
१०.मृत्युञ्जयशतकम्।
११.रामकथापुष्पमञ्जरी।
१२.रामकृष्णस्तोत्रम्।
१३.शङ्करनारायणस्तोत्रम्।
१४.श्रीराघवेन्द्रस्वाम्यष्टोत्तरशतनामस्तोत्रम्।
१५.श्रीतत्त्वनिधिः।
१६.संख्यारत्नकोशः।
१७.संख्यारत्नमाला।
१८.सूर्यचन्द्रवंशावतरणम् (सूर्यचन्द्रवंशानुचरितम्)
१९.सूर्यचन्द्रस्तोत्रम्।
२०.स्वरचूडामणिः।

कन्नडेऽनेन सृष्टानां सृष्टीनां नामानिः-

१.कन्नडटीकायाः किंकर्तृकत्वे निर्णीतिर्न संजाताऽद्यावधि।

१.अध्यात्मरामायणकन्नडटीकु।
२.अभिज्ञानशाकुन्तलद कन्नडटीकु।
३.कृष्णकथारत्नाकरः।
४.कृष्णकथासारसंग्रहः।
५.कृष्णराजवाणीविलासः।
६.देवीमाहात्म्ये कन्नडविवरणे
७.पञ्चतन्त्र।
८.भागवत कन्नडटीकु।
९.भामाकथे।
१०.मालविकाग्निमित्रद कन्नडटीकु।
११.रामायणतात्पर्यदीपिकाटीकु।
१२.वत्सराजकथे।
१३.विक्रमोर्वशीयकन्नडटीकु।
१४.शंकरसंहिता कन्नडविवरणे।
१५.शिवकथासारसंग्रह।
१६.सारसंग्रहश्रीरामकथाकल्पवृक्ष।
१७.सिरिनञ्जुण्डशतक।
१८.सौगन्धिकापरिणय[१]।
१९.हरिश्चन्द्रोपाख्यान कन्नडटीकु।

"कविजनकामधेनुः", "कन्नडद भोज" इत्यादिबिरुदाङ्कितस्य मुम्मडिश्रीकृष्णराजवर्यस्य सारस्वती सिद्धिः सर्वानपि विस्मितविस्मितान्

करोति।

प्रकृतविचार्ये श्रीतत्त्वनिधौ ''निधि''नामका नवाध्यायाः सन्ति। नामान्येतेषामेवंभूतानि:-''शक्तिनिधिः'',''विष्णुनिधिः'',''शिवनिधिः'', ''ब्रह्मनिधिः'',''ग्रहनिधिः'',''वैष्णवनिधिः'',''शैवनिधिः'',''आगम-निधिः'',''कौतुकनिधिः''।

आदित आन्तं चित्रैः नेत्रासेचनकोऽयं ग्रन्थ इति विशेषः। वस्तुतस्तु मुम्मडिकृष्णराजओडेयर्राज्यभारसमये शिलायन्त्रनामको यन्त्रविशेषः कर्णाटकं प्राविशद् यत्साहाय्येन ग्रन्थानां मुद्रणा समारब्धा। प्रायः मुम्मडि-श्रीकृष्णराजओडेयर्कस्य सर्वेष्वपि ग्रन्थेषु द्वित्राणि मनोहराणि चित्राणि वर्तन्त एव।''मैसूरुशैली'' इति प्रसिद्धतमया शैल्या चित्रितानीमानि चित्राणि।एतेषु चित्रेषु केषुचिद्वर्णराहित्यं केषुचिच्च वर्णसाहित्यं दृश्यते।श्रीतत्त्वनिधिग्रन्थे चित्रितेषु चित्रेषु सवर्णतैव भूयस्या मात्रयोपलभ्यते।अवर्णता तु विरला।

**शक्तिनिधिः**-पुराणागमादिषु वर्णितानां स्त्रीदेवतानां विस्तृतं विवरणं तद्ध्यानश्लोकाः, दुर्गाध्यानं, मूलाधारादिसप्तपीठेश्वर्यः, पार्वत्या विविधानि रूपाणि, चतुष्षष्टिकलादेव्यः वागीश्वर्या अनेका आकृतयः, योगिन्यः, सिद्धशाबरादितन्त्रग्रन्थानुगुण्येन वर्णमालायाः ५१ अक्षराणां देवताकल्पना, तद्वर्णनानि, प्रसंगवशात् आयुध-वस्त्र-खनिज-रत्न-मृगपक्षिणामुल्लेखाश्च।

**विष्णुनिधिः**-विष्णोः केशवनारायणादिसामान्यविष्णुरूपैः साकं

लीलाविशेषाणां मूर्तय आयुधानि च।

**शिवनिधिः**-शिवस्य मूर्तिभेदाः, श्वेतवर्णीया कैलासमूर्तिः, नटराज-शिवः, सप्तविधताण्डवनृत्यकारी शिवः, अष्टमूर्तिः, पञ्चपञ्चाशल्लीलामूर्तयः, अर्धनारीश्वरः, द्वात्रिंशद्गणपतयस्तथा सप्तदश सुब्रह्मण्याश्च।

**ब्रह्मनिधिः**-ब्रह्मा,सरस्वती,लोकपालः,प्रजापतिः,विधिः, विश्वकर्मा,पञ्चबह्माणः,सप्तर्षयः,पुण्यपापयोराकृतयः,वेदपुरुषस्वरूपं, तत्कुटुम्बगोत्रादि, षड्वेदाङ्गानि,प्रमुखदर्शनानि,दशदिशा,चतुर्दशभुवनानि, अश्वत्थामादिचिरंजीविवर्णनं, स्वररागतालाः।

**ग्रहनिधिः**-नवग्रहाणां पुराणकल्पनानुसारि वर्णनम्।

**वैष्णवनिधिः**-वैष्णवक्षेत्राणां यात्रास्थलानां नामपट्टिका, श्रीरङ्गादि-देवस्थानानि,मूलमूर्तीनां नामानि, द्वादश आळवराख्या पूज्याः, चतुर्विंशतिसालग्रामाणां विविधानि रूपाणि च।

**शैवनिधिः**-११३ शैवक्षेत्राणि, ललितागमः, शिवरहस्यं, पार्थिवादिलिङ्गभेदाः, त्रिषष्टिनायनार्नाम्नां वर्णनम्, विभूति-रुद्राक्षि-बिल्वपत्राणां विचारः।

**आगमनिधिः**-रामायण-महाभारत-भागवतादीनां परिमाण संख्या, षड्वेदाङ्गानि,अष्टादशपुराणादीनां प्रशंसा,पञ्चायतनपूजाक्रमश्च। (अन्तिमस्य विषयस्य कन्नडेन विवरणं स्वयं ग्रन्थकर्त्रा रचितम्।)

**कौतुकनिधिः**-क्रीडाविवरणम्।प्राचीनकालिका गृहाभ्यन्तरे

क्रीड्यमानाः क्रीडाः।पेटिकाक्रीडा, अक्षक्रीडा, गजक्रीडा, संख्यालिपि क्रीडा, सद्योजाताक्षक्रीडा, अष्टमुखी,बरजुपगडेनामिका क्रीडा,नवग्रहभू चक्रादयः क्रीडा योगासनानि च।

यद्यपि विश्वकोशत्वरूपो धर्म एतेषु सर्वेषु ग्रन्थेषु प्रकामं गोचरः। परन्तु आधुनिककाले यथा प्रविष्टीनामकारादिक्रमेण योजनं शुद्धतरं क्रियते तथा योजनं नास्त्येतेषु ग्रन्थेषु।मूलग्रन्थानां केषाञ्चन भागानां योजनेन विश्वकोशनिर्माणक्रमो यद्यपि अग्निपुराण-गरुडपुराण-विष्णुधर्मोत्तर-शिवतत्त्वरत्नाकरेषु दृश्यते।परन्तु तत्र विषयाणां सक्रमं योजनं नास्तीति सर्वेऽप्यङ्गीकुर्वन्ति चक्षुष्मन्तः।अत्र सक्रमत्वं नाम अकाराद्यक्षरानुक्रमणिकावत्त्व-वर्गीकृतविषयवत्त्वान्यतरत्वं बोध्यम्। अकारादिक्रमेण पदानां योजनं, विस्तरेण विवरणमपेक्षमाणानां शब्दानां विवरणानि संस्कृतभाषया ददानाः कोशास्तु विरला एव।यदि सत्य मुच्यते विश्वकोश इति पदस्य न्यायं ददानाः कोशास्तु अष्टादशे शतके क्रैस्तवीये शके समुत्पन्ना न तु ततः पूर्वम्।तादृशानाम् अङ्गुली गणनीयानां मध्ये त्रयोऽधुना परिचाय्यन्ते।एते विश्वकोशत्वं पदकोशत्वं च युगपद् बिभ्राणा महान्तः सारस्वतराशय इत्यत्र न संशयः।''रीडर्स् डैजेस्ट्''नामिकया प्रसिद्धया नियतकालिक्या यः कोशः प्रकटितः स उभयविधं स्वरूपं बिभर्तीति ये जानन्ति तेषां कमपि विस्मयं नावहति कोषाणाममीषां पदकोशत्व-विश्वकोशत्वोभयधर्मवत्त्वम्।

संस्कृतपाण्डित्य-पञ्जीकरण-चरित्रे कोशानामेतेषां महदेव कीर्ति-मानम्।भारते भारतीयलिपिमुद्रणाकलायाः शैशवावस्थायामेव

वर्तमानायां सत्याम् अस्मदनूह्येन श्रमेण मुद्रिता एते संस्कृतसरस्वती स्वर्णकिरीटस्य वज्रपिञ्छानि। ते-शब्दकल्पद्रुमः, वाचस्पत्यं, लघुशब्दार्थसर्वस्वं च।

## १५.शब्दकल्पद्रुमः

शब्दकल्पद्रुमो राजराधाकान्तबहद्दूर्कस्य रचना। कल्पद्रुमः स्वर्गेऽस्तीति,स्वच्छायम् आश्रितानां सर्वेषामप्यभीष्टार्थान् पूरयतीति च प्रसिद्धम्। एवमेव ये स्वाभीष्टशब्दानामर्थान् वा तदभिधानाभिधेयान् विचारान् वा प्राप्तुकामाः सन्त उपसर्पन्ति प्रकृतमपि कोशं तेषां सर्वेषां तत्तदभीष्टपूरणं करोतीति कारणात् ''शब्दकल्पद्रुम'' इति संज्ञितः कोश एष इति स्वयं कोषकर्ता ज्ञापयति।

बृहदाकारवति संपुटपञ्चके मुद्रितोऽयं ग्रन्थः। प्रतिपुटं स्तम्भत्रयं (Three columns)वर्ततेऽत्र। दर्शनेनैतस्य झटित्यस्माकं हृदये स्फुरति प्रसिद्धो महाभारतीयः श्लोकः-''यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् '' इति।

समस्तानां शब्दानां व्युत्पत्तिः, शब्दानामुपलभ्यमानाः सर्वेऽर्थाः, प्रायेण सर्वेषामप्यर्थानामस्तित्वे प्रयोगैः साक्ष्याणि, विशिष्टविवरणसापेक्षेषु स्थलेषु मूलग्रन्थैः समग्रा उद्धृतयः, लघुनि ग्रन्थगात्रे समग्राणां ग्रन्थानां सर्वे भागाः-इत्यादिकं वैशिष्ट्यमस्य कोशस्य। बृहति कोशेऽस्मिन् निरूपितानां विषयाणां पट्टिका प्रथमे संपुटे मुद्रिता। एतद्दर्शनेन

सर्वेऽपि विस्मयेन मूका भवन्तीत्यत्र नातिशयोक्तिः।

कोषस्यास्य कर्तू राधाकान्तदेवस्य जीवनचरित्रं शब्दकल्पद्रुमस्य प्रथमे संपुटे मुद्रितम्।रचयितुर्मूलपुरुषः श्रीहरिदेवः।तद्वंशे क्रमशः दुर्गावरः,विश्वेश्वरः, विघ्नेश्वरः,पूर्णानन्दः, पीताम्बरश्च जाताः। पीताम्बरस्य धन्यपीताम्बर इत्यपि संज्ञाऽऽसीत्।पृथ्वीधरः, कुरुनन्दनः, नित्यानन्दः, श्रीमान्, चण्डीवरः, परमानन्दः, काशीनाथ इत्यादयो वंशेऽस्मिन् जाताः।अस्मिन्नेव वंशे जातस्य नवकृष्णदेवाख्यस्य नवकृष्णदेवाख्यस्य ईस्ट् इण्डिया कम्पेनी(East India company) संस्थायां 'मुन्षी' उद्योगो लब्धः।स तु सिराजुद्दौला-नामकं मुस्लिम्राजं विरोधिनि प्रवृत्ते युद्धे तथा सिराजुद्दौलाराज-मरणानन्तरं प्राप्तराज्यं कासीं आलीखान्राजं विरोधिनि संगरे कर्नल् क्लैव्नामकेन तथा मेजर्आडम्नामकेन च साकं स्वयमायोधनं कृतवान्।

षाहा आलम् बादषाहानामकेना राज्ञा प्राप्त''राजबहाद्दूर्'' बिरुदोऽयं काश्यां नवकृष्णेश्वरलिङ्गं प्रतिष्ठापयामास। कोल्कत्तायाः हेस्टिंग्स् अप्येतेन बहूनि राजकार्याणि कारितवान्।

तदन्वये प्रसूतस्य गोपीमोहनदेवस्य पुत्र एव राधाकान्तदेवः। एष वङ्गभाषा,फारसी,अरब्बी,इङ्ग्लीष्, संस्कृतं चेत्येतासु पञ्च भाषासु समासादितपाण्डित्यः सन् गवर्नर्कस्येच्छानुसारेण म्याजिस्ट्रेट्पदवी मलङ्कृतवान्।द्वित्रान् ग्रन्थान् फारसीभाषात इङ्ग्लीष्भाषाया मनूदितवांश्च।

व्यावहारिकाः क्लेशा विशिष्टगुणवन्तमपि जनं बाधन्त एव। कदाचिदेतस्य विरोधे कोऽपि महानुभावो मिथ्याभियोगं पञ्चीकृत-वानधिकरणे। परन्तु तत्पक्षीयस्य प्राड्विवाकस्य(Advocate) वाक्कौशलेन अनपराद्धत्वमस्य निराबाधमाविष्कृतम्।

राधाकान्तीया परमाद्भुता रचना शब्दकल्पद्रुमाख्या प्रथमे संस्करणे समादत्तवङ्गलिपिरासीदिति ज्ञायते। समाप्तेषु सर्वेषु पुस्तकेषु द्वितीयमुद्रणा-प्रसंगे भारते मुम्बयीकाशीप्रभृतिप्रदेशेषु प्रचुरप्रचारायाः देवनागर्या एवोपयोगः करणीय इति संपादकाभ्यां वरदाप्रसादवसु-हरिचरणवसुभ्यां निरणायीति विज्ञायते। प्रथमं मुद्रिते शब्दकल्पद्रुमे सर्वेषां शब्दानां व्युत्पत्तयो न दत्ताः। देवनागर्यां मुद्रिते द्वितीये संस्करणे सर्वेषामपि शब्दानां व्युत्पत्तयो योजिताः। न केवलमेतावदेव, प्रथमसंस्करणा प्रविष्टा अपि शब्दाः सहस्रशः प्रवेशिताः। एष सारः-अस्मदुपलभ्यमानं शब्दकल्पद्रुमसंस्करणं राधाकान्त-वरदाप्रसादवसु-हरिचरणवसुनाम्नां त्रयाणां महापण्डितोत्तमानां भव्या रचना। त्रिमूर्तीनाम् अमीषां श्रद्धया तितिक्षया च संस्कृतसरस्वत्याश्चूडामणिरयं शब्दकल्पद्रुमः परम्परीणेऽध्ययने परं निष्ठानां पण्डितानां परामर्शनयोग्यः परमोत्कृष्टः कोशः संजातः।

भूयस्सु स्थलेषु मूलग्रन्थानां केचन भागाः समग्रा यदत्र दत्तास्तत् अनल्पाय गर्वाय समभूद् विदुषामेतत्कोषजुषां दोषज्ञानाममुद्रित-मुख्यग्रन्थे काल इत्यत्र न संशयकणिका। ग्रन्थसंपादनशास्त्रदृष्ट्या अनेकेषु ग्रन्थभागेषु उत्कृष्टाः पाठा अत्र दत्तेषु पाठ्यभागेषूपलभ्येरन्।

मातृकापाठसंपादनविज्ञाने सुज्ञाना नात्र पातितकटाक्षा इति तु भूरि विषाद्यम्।

अधुना सर्वत्र समुपलभ्यमाने शब्दकल्पद्रुमसंस्करणे मुद्रितानाम् अक्षराणां विन्यासाः सर्वथाऽप्यहृद्या ये द्रष्टॄणां हृदये दर्शनानुपदं संस्कृताभिमानस्य ह्रसिष्णुतामुत्पादयन्तीव। विद्यावतां भागधेयं मन्ये यत् प्रत्यग्रा वार्ता शब्दकल्पद्रुमसंबद्धा कर्णपथातिथीभवतिः- तिरुपतिस्थराष्ट्रीयसंस्कृतविद्यापीठे नवीनं संस्करणं प्रकाशितं कोशस्यास्य यत्र पुनरक्षरसंयोजनं कारितं सुष्ठुतरया देवनागरीलिप्येति। प्रशस्यतममेतत् कर्म।

## १६.वाचस्पत्यम्

''वाचस्पत्यम्''इति संज्ञाम् अश्रुतवान् संस्कृतज्ञो जनः समग्रे भारते कोऽपि नास्तीदानीम्। षट्सु संपुटेषु पूर्णो महाविश्वकोशोऽयं यस्य रचयिता''तर्कवाचस्पति''रिति बिरुदाङ्कितस्तत्रभवान् तारा नाथः।

अस्य महाकोशस्य पीठिकायामेते ग्रन्था वा शास्त्रविषया वा मुद्रिताः-पाणिनीयं लिङ्गानुशासनं, व्याकरणीयानां मुख्यानां प्रत्ययानां पट्टिका, रूढयौगिकभेदेन शब्दद्वैविध्यं च। यद्यप्याधुनिके काले एतादृश्यः पट्टिका बहुषु ग्रन्थेषूपलभ्यन्ते, परन्तु यस्मिन् काले वाचस्पत्यं मुद्रितं तस्मिन् काले पूर्वपरिशिष्टान्येतानि विदुषां कृतेऽमूल्या निधय इवाभवन्।

अत्रोपलभ्यमानानां विषयाणां पट्टिका काचिदादिमे संपुटे दत्ता। तदनुसारेण सर्वाणि दर्शनानि,पुराणेतिहासयोः समग्राः प्रतिपाद्या विषयाः, ज्यौतिष-तन्त्र-व्याकरण-संगीत-निष्ठाः पारिभाषिकाः सर्वे शब्दाः, छन्दोऽलङ्कारनृत्यादीनां सकलानि प्रतिपाद्यानि वस्तूनि इत्यादीत्यादि। किं बहुनोक्तेन ? अलमेष कोशः शब्दकल्पद्रुमाय।

अधितारानाथं संक्षेपतो परिचायितं षष्ठस्य संपुटस्योपसंहारे। वात्स्यवंशे कमलाकान्ताभिध आसीद् वैदिकपुंगवः। तद्वंशीयस्य मुकुन्दा भिधस्य पुत्रो रामतर्कसिद्धान्तः। स सदाऽपि शिव शिव इति जपति स्म। तस्मात्तस्य शिवशिवः इत्येव संज्ञाऽजनि। तस्य त्रयः सूनवः- वंशीधरतर्क-पञ्चाननः, दुर्गादासः, नानाशास्त्रेषु नदीष्णश्च कालिदास सार्वभौमः।

कालिदाससार्वभौमस्य पुत्र एवास्माकं कोषकृत् तारानाथः। अस्य तर्कवाचस्पतिरिति बिरुदमस्यैव गुरुणा प्रत्तम्। कोल्कत्तायाः शासकीयायां संस्कृतपाठशालायां कृताध्ययन एष काशीप्रभृतिषु स्थलेषु समधीत विविधशास्त्रोऽभूत्। यस्यां शालायामध्ययनमस्य प्रथमं कृतं तस्यामेव शालायां त्रिंशद्वर्षाणि व्याकरणादिशास्त्रेषु अध्यापकोऽभूत्।

१८६६ ईसव्यां प्रारब्धा वाचस्पत्यस्य रचना १८८४ ईसव्यां संपूर्णेति ज्ञायते। अर्थात्, अष्टादशवर्षेषु परिपूर्णतामनायि महाकोश एषः।

वाचस्पत्यस्य रचनायामसमाप्तायां कुतश्चित् कारणात्

तारानाथस्य वेतनेऽर्धमात्रया नैयून्यं संजातम्। तथाऽप्यध्ययनात् कथमप्य पराजयमानोऽयं वाचस्पत्याख्यं महाकोशम् एकल एव रचयमास इति तु साक्षाद् वाचस्पतिरेव प्रभवति भगीरथश्रमसोदरं श्रममेतदीयं वर्णयितुं नान्य इति घोषयामो वयम्। कानि कानि कष्टानि सोढव्यान्या पतितानि स्युस्तारानाथेन तथापि कथमेष संपूर्तिं कृतवान् ग्रन्थस्यास्येति केवलं कल्पनयैव विस्मयजो रोमाञ्च उद्भवति।

परन्तु कोशस्यास्य मुद्रणां दृष्टवतां पाठकानां कश्चनोद्वेगः पदं निदधाति हृदये। अत्रत्यानि मुद्राक्षराणि (Fonts)सर्वथा कुरूपाणि पठनानर्हाणि च। ग्रन्थस्य पठनमेव कदाचिदनल्पं श्रममपेक्षते। तारानाथस्तु कोल्कत्तानगरे स्वसमये समुपलब्धानामेवाक्षराणामुपयोगं कृतवानस्ति। शब्दकल्पद्रुमस्य मुद्रणा वाचस्पत्यस्य मुद्रणाया वरम्। केवलं व्यापारार्थं द्युतिविन्यासेन (Photo offset) वाचस्पत्यं भूयो भूयो मुद्रापयन्तः प्रकाशका यदि सुन्दरैर्लघुतमैश्चाक्षरविन्यासैरस्य मुद्रणाम् एकस्मिन्नेव संपुटे निर्वर्त्य प्रकाशयेयुः, इत्थंभूतलक्षणां सद्बुद्धिं प्रदर्शयिष्यद्भ्यस्तेभ्यः समस्ताऽपि सांस्कृती जगती ऋणिनी भविष्यति।

## १७.लघुशब्दार्थसर्वस्वम्

'विश्वकोश' इति शब्देन श्रुतेन अकारादिमातृकापरिपाटी क्रमेण दत्तेषु शब्देषु स्वयं विश्वकोशं निर्मातृभिर्गद्ये तत्तद्विचारे विरचितालेखनसामग्रीत्येव बोधो भवति न पुनर्ग्रन्थेभ्य उद्धृतास्तत्संबद्धा

ग्रन्थभागा इति। संस्कृतेतराभिर्भाषाभिर्विरचितेषु विश्वकोशेषु साधारणमिदं स्वरूपम्। परन्तु संस्कृतेन रचितेषु विश्वकोशेषु उद्धृतानामेव ग्रन्थांशानां साम्राज्यम्। वाचस्पत्यशब्दकल्पद्रुमादिषु वस्तुत इदमेव कृतम्। कोशकर्त्रैव लिखितं लेखनमिदमिति शृङ्गग्राहिकया निर्देश्या भागास्तत्राल्पीयांसः। 'विश्वकोश' इति शब्दश्रवणमनु या कल्पनाऽस्माकं मनसि स्फुरति तस्यै कल्पनायै न्यायं ददत् संस्कृतविश्वकोशस्तु तत्र भवता परवस्तु वेङ्कटरङ्गाचार्येण विरचितो यो "लघुशब्दार्थसर्वस्वम्" इति संज्ञितः।

महाकोशस्यास्य प्रथमः संपुटः ए.सि.श्रीनिवासचारियर् नामकेन १८७७ ईसव्यां विशाखपत्तने आर्षमुद्रणालये मुद्रापितः। १८७८ ईसव्यां च द्वितीयः संपुटस्तत्रैवार्षमुद्रणालये राचकोण्डअप्पल नरसिंहनामकेन मुद्रापितः। तेलुगुलिप्या मुद्रितोऽयं ग्रन्थः। संस्कृतस्य मुद्रणार्थं यदद्यत्वे देवनागरीलिप्या उपयोगोऽधिकतरं क्रियते तत्रोत्तर प्रदेशीयमुद्रणालयेषु समुपयुक्तायाः तत्प्रान्तलिप्या देवनागर्याः प्रभाव एव हेतुरिति, पूर्वं तु संस्कृतमुद्रणायै तत्तत्प्रदेशव्यापिका हृदयङ्गमा लिपय एव प्रयुक्ता आसन्नेदानीमिव उत्तरप्रदेशमुम्बयीप्रदेशादिप्रान्तेषु रूढमूला देवनागरीति कृतनामधेयेति च विदितवेदितव्यानां न विस्मयाय विचार एषः।

ग्रन्थारम्भे पीठिकाऽऽनुष्टुभा छन्दसा रचितैः ११२ पद्यै-र्दत्ता यस्या अयं सारः:-

पूर्वं केचन भरद्वाजवंशीया भट्टोपाह्वया वेदविद्वांसः श्रीशैले

तं परितो वा निवासं चक्रुः। यद्यप्येषां सर्वेषु वेदेषु समानोऽधिकारस्तथापि विशिष्य सामवेदीया आसन्नेते। तस्मादेवौद्गात्रे विशेषत एषामनन्यलभ्य मन्यदुर्लभं च कौशलमासीत्। तेषां ध्येयं परवस्त्वासीत्तस्मादेव ते 'परवस्तु' संज्ञाका आसन्। एतेषु भट्टनाथः साङ्गोपाङ्गवेदवित् सन् श्रीमतस्तत्रभवतो रामानुचार्यादिवाध्यगीष्ट श्रीभाष्यम्। तद्वंशजो गोविन्दाचार्यो वरवरा ह्वयाद् द्रविडवेदं तिरुवाय्मोळीत्यादिकं लेभे। कस्यचित्त्वथ कालस्य स जग्राह संन्यासम्। गृहीतसंन्यासः सन्नेष शेषाचलं गत्वा श्रीनिवासम् असेवत। तद्वंशीया ब्राह्मणा वेङ्कटगिर्यधीशेन राज्ञा प्राप्ताग्रहाराः सुख मूषुः। ते नानास्थानेषु सकलशास्त्रप्रति पाद्य विषयेषु वादाहवकुशलाः कर्मठाः सन्तः जैत्रयात्रां सुखेनाकुर्वन्। तद्वंशे क्रमेण श्रीनिवासाख्यो विद्वानजायत। तस्य च श्रीनिवासगुरोः पुत्रो रामानुजः। तत्पुत्रः (द्वितीयः)श्रीनिवासः। स बाल्य एव नष्टमातापितृकः सन् दायादैरेवोप नीतो विद्यां ग्राहितश्च। ततो वेङ्कटनाथाख्यादुद्दण्डात् पण्डितात् मन्त्रसंस्कारं प्रापितः। तदा हैदराख्यान् मुस्लिमात् वेङ्कटगिर्यधीशस्य जातायां पीडनायां, समात्रादिस्त्रीकः सन् विजयनगराधीशमुपससर्प। तत्र विदुषां परिचर्यया समासादितसकलविद्याकः सन् स्वकीयं देशं प्रशान्तोप प्लवं ज्ञात्वा तत्र निवर्तनं चिकीर्षन् मध्येमार्गं विशाखपत्तन माससाद। तदा आङ्ग्लानाम् आस्थाने मन्त्रिपदवीजुषा जग्गरायाख्येनास्य संपर्को जातः। तेन विज्ञप्तः संस्तत्रैव कञ्चित् कालमुवास, धनवस्तुजातादिभिः सम्मानितश्च तेन जग्गरायेण। सोऽपि जग्गरायो विद्यावान् धार्मिकश्च। क्रमेणोपचीयमाने तयोः सौहार्दे जग्गरायस्य विज्ञप्त्यनुसारं कोदण्डरामदेव

मन्दरं तत्रैव प्रतिष्ठापितवानसौ श्रीनिवासः।स जग्गरायोऽस्य शिष्यत्वं प्राप्य शास्त्राण्यधिजगे।न केवलमेतावदेव, तस्य जग्गरायस्य सूर्यप्रकाश रायादयस्त्रयस्तनया अप्यस्य शिष्यत्वं प्राप्य विद्याः प्रापुः।द्वितीयो भास्कररायो निधनं गतः।तृतीयः सूर्य नारायणाख्यो वैष्णवं मतं राममन्त्रं चाग्रहीत्।जग्गूरायाख्यः कस्यचित् कालस्य कालवशं गतः। ततस्तत्तनययोरुपयोगार्थं श्रीनिवासेन भक्तिरत्नावलीग्रन्थस्य, विश्वगुणा दर्शचम्वाश्चानुवादस्तेलुगुभाषया कृतः।बोब्बिलि-राजेन तेलुगु-भाषया कृतायाः प्रश्नोत्तरात्मिकाया वेदान्तकृतेः सुगमानाम्नी व्याख्याऽपि तेलुगुभाषया कृता।तेलुगुभाषयाऽश्वलक्षणग्रन्थश्च कृतः। संस्कृतभाषया ऽनेन कश्चन निघण्टुरप्यकारादिक्रमिकः कृतः।

तस्य श्रीनिवासस्य द्वौ तनयौ।प्रथमो रामानुजः।द्वितीयस्तु वेङ्कटरङ्गेशः।द्वावपि स्वपित्रैव विद्याप्रारम्भशिक्षां प्रापितौ।परन्तु हन्त, अप्राप्त एव ग्रन्थं कर्तुर्द्वादशे वर्षे पिता निधनं यातः। परन्तु पित्रा संभृतं ग्रन्थराशिमवलम्ब्य स्वयमेवानुवर्तितविद्याभ्यासौ द्वावपि सहोदरौ स्वयमाचार्यकं प्राप्तौ। व्याकरणस्य केचन विषया ज्येष्ठेन रामानुजेनानुजे, न्यायस्य च केचन विषयाः कनिष्ठेन वेङ्कटरङ्गेशेनाग्रजे संक्रामिताः।ततो वेङ्कटाचार्याख्यो विद्वान् वादकथायां विद्वत्त्वं ग्राहयामासा नयोः। वेदान्तशास्त्रविचारं तु पित्रा कृतस्य ग्रन्थस्याध्ययनेन स्वयं प्राप्तावेतौ।वेङ्कटनाथ(=वेदान्तदेशिक)विरचितग्रन्थानामध्ययनेन वेदान्त ज्ञानमनयोरुपाचीयत।यदृच्छया तत्रागतः कश्चन रामानुजभट्टनाथा ह्वयो भाष्यादिपाठनेऽभ्यर्थितः सन् एतयोर्विद्याप्रेमाणं दृष्ट्वा प्रीतान्तरङ्गः

सन् ''स्वयमेव सकलानां भाष्याणामर्थाः स्फूर्यासुर्युवयोः '' इत्याशिषमदात्। ''अन्यो गुरुर्मा भूद् युवयोः'' इत्यपि स्पष्टमभाषिष्ट।तस्य वाक्सिद्धिबला देतयोर्द्वयोरपि भाष्यादिष्वनितरसाधारणं प्रभुत्वं संपन्नम्।

सूर्यप्रकाशरायस्य द्वौ तनयौ।प्रथमो वेङ्कटजग्गरायः। द्वितीयः सौम्यनारायणः।वेङ्कटजग्गरायो ज्यौतिषशास्त्रे प्रचण्डः। प्रकृतं कोशकर्तारं च गुरुं निश्चिकाय।दर्शनानि चाधिजगे।परन्त्वल्पायुष्को दिवं यातः।

एतेन नितरां निर्विण्णः, अपरेषामपि केषांचन विदुषां बन्धूनां गुणवतां चाल्पायुष्ट्वं दृष्ट्वा केषांचिदभ्यर्थनया कांश्चिद् ग्रन्थान् रचितवान् वेङ्कटाचार्यः।यथा-राजचूडामणिदीक्षितीयस्य कमलिनीकलहंसस्य तेलुगु भाषानुवादः, वेदान्तसंग्रहः-तेलुगुभाषया,गीतप्रबन्धस्तेलुगुभाषया, अभिज्ञानशाकुन्तलस्य तथा मञ्जुलनैषधस्य च कथा संस्कृतभाषया।

ततो विपुलेभ्यो ग्रन्थेभ्यो विषयान् संगृह्य कस्यचन कोषस्य रचनामप्यारब्धवान्।नारायणगजपतिरायाख्यो धनिक एतच्छ्रुत्वा संतुष्टान्तरङ्गो धनव्यवस्थां तु यद्यपि कृतवान् परन्तु ग्रन्थमुद्रणा काले तु किञ्चिदुपैक्षत।एतदन्तरे विशाखपत्तने पाठशालायाः स्थापनार्थं तन्निर्वाहाय चावश्यकं धनं च प्राप्तुं देशाटनमचिकीर्षद् वेङ्कटाचार्यः। बोब्बिलिपुरे इनुगण्टिनामक वंशकुलोत्पन्नः सीतारामाख्यो राजा प्रतिवर्षं पाठशालाया निर्वाहार्थं धनप्रदानं प्रतिज्ञातवान्।तत्र विद्वान् वेङ्कटकृष्णसोमयाजी तत्रत्यानां धनिकानां सकाशाद्धनं कोशकर्त्रे प्रदाने महदेव साहाय्यं कृतवान्।मेल्विल् (Millville?)नामक आङ्ग्लाधिकार्यपि

पाठशालायाः प्रचालने महदेव साहाय्यमाचरितवान्।

एतदन्तरे बोब्बिलीपुराधीशस्य राज्ञी लक्ष्मीचेल्लम्मा स्वशशुरेण क्रीतं मुद्रायन्त्रं कोशकर्त्रे दापयामास। कार्मैकल् (Car Michael ? / Colonel Michael ? ) नामक आङ्ग्लः "कोशोऽयं मुद्रणीय एव। परन्तु कोशोऽयं महत्तमोऽस्ति। तस्मादस्य कोशस्य सारः प्रथमं मुद्राप्यताम्। तदर्थं धनराशिं कथंचिन्मम सखिभिर्दापयामि "इति कस्यांचित् सभायाम् अवदत्। ततो वेङ्कटाचार्यः कोशस्य संग्रहं कृत्वा 'लघुशब्दार्थसर्वस्वम्' इति नामधेयं कृतवान्। मुद्रणा चारब्धा।

कतिसंपुटेषु समग्रतामनायि कोशोऽयमिति न ज्ञायते। रचना तु पूर्णैवेति किल स्पष्टमभाषिष्ट ग्रन्थकर्ता। अस्मद्दृष्टिपथमागता तु केवलं प्राथमिकी संपुटद्वितयी कृतेरस्याः।

प्रथमे संपुटे "अ"कारादयः प्रविष्टयः(entries)। द्वितीये च संपुटे "आ"-कारादयः प्रविष्टयः(entries)। मुद्रणा समग्रस्यैव कोशस्य जाता वा, आहोस्वित् कुतश्चित् कारणाद् द्वितीयसंपुटमुद्रणानन्तरं स्थगिता वा मुद्रणाऽस्येति तु वक्तुं न प्रभवामः।

यदि लघुनामधारिणः कोशस्य तदुपनामरहितस्य महत श्च मूलकोशस्य (प्रायः 'शब्दार्थसर्वस्वम्'इति कृतनामधेयस्य) मुद्रणा समग्रैव संपन्ना, तत्प्राप्तिः तस्य च पुनर्मुद्रणायोजना संस्कृतज्ञानां परमो धर्मो भवतीत्यत्र न संशयः। अमुद्रितेऽपि कोशयोरनयोर्मूलहस्तप्रतिरधुना यदि कुत्राप्यवशिष्टा- कुत्र सा वर्तते, कस्यां स्थितौ वा वर्तते इत्येतदादिकं

सम्यगेव विशोध्य अस्मिन् विषये पर्याप्तं प्रकाशं वितरीतुं तज्ज्ञाः विज्ञाप्यन्ते। अध्येतत्कोशं विशाखपत्तनेऽन्वेषणा करणीयेति प्रतिभाति।

अन्यच्च। अकारादिक्रमवान् कश्चन कोशः स्वपित्रा श्रीनिवास विदुषा रचित इति किल प्रकृतकोशकर्ता ब्रवीति। स कोशः किंसंज्ञावानिति न विदितम्। तस्य पर्याप्तया मात्रया परिचयप्रदाने ग्रन्थकर्त्रीया पीठिका सर्वथैवोदास्ते। तस्मिन् विषयेऽपि संशोधनस्यावश्यकता समस्ति। तस्य कोशस्य दर्शनेनैव तदपेक्षया महत्तरः कश्चन कोशः किं पर वस्तुवेङ्कटरङ्गाचार्येण रिरचयिषितोऽभूद्वा न वेति विचारः संशोधन सापेक्षः।

शास्त्रीयान् विचारान् बुभुत्सूनां तु महानेवोत्सवोऽत्र यत्र वैशद्येन सकला अपि शास्त्रार्था विवृताः। अत्र मुख्यानां सर्वेषां पदरूपाणां स-धातुनिर्देशाः प्रविष्टयो वर्तन्ते। येषु -घञ्प्रत्ययादिषु- अकार एव शिष्यते तेषां सर्वेषां प्रत्ययानामुल्लेखः 'अ'इत्यत्र कृतः। 'अख्यातिः', 'अनिर्वचनीयख्यातिः' 'असत्ख्यातिः' इत्यादिषु तत्तत्परिचय करम्भिता लेखा एव सन्ति, न केवलम् एकेन वाक्येन द्वाभ्यां वा वाक्याभ्यां संक्षिप्तं परिचयमात्रम्। 'आकडाराधिकार'इति प्रविष्टिरप्यत्र द्रष्टव्या यत्र-कुत्र कुत्र संज्ञयोर्द्वयोरुपस्थितिः,कां संज्ञां बाधित्वा का संज्ञा विधीयत इति सुविशदमुपन्यस्तम्। "एका संज्ञा"इत्यस्य विवरणमत्र तथा दत्तं यथा व्याख्योपव्याख्यास्वपि न गोचरीभवति तत् कदाचित्। अष्टाध्याय्याः सुस्पष्टा सविवरणा च विषयानुक्रमणिका संस्कृतग्रन्थेषु

कुत्राप्यन्यत्र न मया दृष्टा यथाऽत्र। अवच्छेदकविषये त्वत्र दत्तं क्रोडपत्रसोदरं परिचयपत्रं दृष्ट्वा नवीनन्यायमधिजिगांसूनां हृदयं संतोषेण नृत्यतीव। "अर्जुन" इत्यत्र महाभारतीया अर्जुनकथा समग्रैव प्रत्ता। गद्यमत्रत्यमतीवोन्नतस्तरीयं च सरलं च दोषलेशहीनं च। 'अलङ्कार'इत्यत्रालङ्काराणां लक्षणानि सोदाहरणानि दत्तानि। यद्यपि उदाहरणान्यत्रत्यानि पूर्वग्रन्थेभ्य उद्धृतानि परन्तु लक्षणवाक्यानि प्रायः पूर्वरचनीयानां लक्षणानां सारमादाय गद्ये स्वयं रचितानि ग्रन्थं कर्त्रा। अलंकारविभागानां सविस्तरं निर्देशनमत्र प्राप्यते। 'आदिवृद्धि' रित्यत्र कुत्र कुत्रादिवृद्धिर्भवति तद्धितेषु कुत्र नेति स्पष्टतरो निर्देशः प्राप्यते—येन "यत्र यत्र तद्धितो वर्तते तत्र तत्रादिवृद्धि"रिति भ्रान्त्या मन्यमानानां प्राधीतानां तद्विषयकभ्रान्तिनिवारणपूर्वकं केवलं "कितां,ञितां,णितां च प्रत्ययानाम् आदिवृद्ध्युत्पादनक्षमत्वम्" इति च संविज्ञानपूर्वकं शुद्धो बोधो जायते। 'अश्व' इति शब्दस्य याऽत्र प्रविष्टिस्तत्र अश्वशास्त्रविषयिका लघुकायिका कृती रचिता[१]। अकारादीनाम् आकारादीनां वेदान्तमीमांसाधि करणानां वा व्याकरणपरिभाषाणां वा सुविस्तरः परिचयोऽत्र गोचरीभवति। शारीरकाधिकरणानां शङ्कररामानुजमध्वभाष्यानुसारेण सारोऽसन्देग्धव्यया दृढया च भाषया तथाऽत्र संगृहीतो यथैतत्पठनानुपदं सशिरःकम्पं ग्रन्थकर्तारम् अवर्धापयन् जनो नूनं विरलः।

---

१.अश्वशब्दविषयेऽत्रत्यो लेखो दत्तः परिशिष्टत्वेन ।पृ.५७-७७.

मैसूरवीये प्राच्यविद्यासंशोधनालये प्रथमवारं दृष्ट्वैतन्महाकोशा वयं रोमाञ्चितकञ्चुका भूयो भूयोस्मानेवापृच्छाम-'कोऽपि मनुष्यः किमेतावत् कर्म कर्तुं शक्नोति ?' इति। अहो पाण्डित्यम् ! अहो तितिक्षा ! अहो श्रद्धा !अहो अस्पृष्टाप्रस्तुतविषयरूपविघ्नम् अवधानम्! परम्परीणया पद्धत्या कृताध्ययना विद्वांसो यदि मनोहत्य कार्यं कुर्वन्ति, कान्यद्भुतानि ते साध्नोतुं शक्नुवन्तीत्यस्य प्रबलं प्रमाणमिदं लघुशब्दार्थसर्वस्वम्।

## १८.संस्कृतवाङ्मयविश्वकोशः

एष विश्वकोशः समस्तानामपि भारतीयानाम् अभिमानस्य हेतुभूतो  महतो विश्वकोशस्य बृहती योजना। महासंपुटस्यास्य मूलयोजनं महामहोपाध्यायस्य तत्रभवतो मथुराप्रसाददीक्षितस्य स्वप्नः। स्वप्नश्चायं विश्वविख्याते वाराणसेयसंपूर्णानन्दविश्वविद्यानिलये जन्म लेभे। संपूर्णायाम् अस्यां योजनायां ''न केवलं संस्कृते परन्तु भारतीयायां कस्यामप्यपरस्यां भाषायाम् एतेन सदृशः कोशो न जात ''इति कीर्तिं प्राप्स्यति।

अत्रत्याः प्रविष्टयः कया विधया वर्तन्त इति सारस्वते प्रपञ्चे ज्ञापनार्थम् अत्रत्या काचित् प्रविष्टिः ''अत्रि''नाम्नी पार्थक्येन लघुपुस्तकाकारं लम्भितः प्रकाशितश्च। ''अत्रिनिर्वचनम्''इति संज्ञा वत्यस्मिन् लघ्व्यां कृत्यां ९६ पुटाः सन्ति। अत्रिमहर्षिमधिकृत्य ये वेदशास्त्रपुराणादिषु समुपलभ्यन्ते विचरास्ते सर्वेऽत्र संपुञ्जिताः। अत्र

पूर्वग्रन्थादुद्धृतानां वाक्यानां केवलमनुवादाः सन्तीति न भ्रमितव्यम्। यद्यप्यनुवादा विपुला वर्तन्ते।परन्तु संपादकीया विचारा ये योजिता अधिकतरया मात्रया ते दर्शयन्ति विचारविश्लेषमुत्कृष्टस्तरीयम्।अत्रि महर्षिमधिकृत्य संशोधनं चिकीर्षूणामाकरग्रन्थोऽयम्।

एष सारोऽत्रत्याया हिन्दीपीठिकायाः—एतादृशस्य विश्वकोशस्य रचना तत्रभवतो दिवङ्गतस्य महामहोपाध्यायस्य गङ्गानाथझावर्यस्य मस्तिष्के प्रापावतरणम्।तत्पुत्रेण श्रीमता महामहोपाध्यायेन मथुराप्रसाद दीक्षितेन विश्वकोशस्यास्य प्रस्तावो विश्वविद्यानिलये कृतः।विश्वकोश रचनापरिशीलनार्थं समितिः काचिद् रूपिता।तत्रैते विद्वन्मणय आसन् - आदित्यनाथझा, क्षेत्रेशचन्द्रचट्टोपाध्यायः,महामहोपाध्यायः पण्डितो मथुराप्रसाददीक्षितः, कुबेरनाथशुक्लः, रामनरेशमिश्रः, बदरी नाथशुक्लश्च।समितिरेषा कार्यारम्भं १९५९ ईसव्याः सेप्टेम्बर्मासे कृतवती।अत्यल्प एव समये वेदोपनिषत्पुराणोपपुराणमहाभारताल ङ्कारशास्त्रतन्त्रस्मृतिकोशदर्शनानां शब्दसंग्रहः कृतः।

पारिभाषिकाणां शब्दानाम् अतिविस्तृतं विवेचनमनेन योक्ष्यते। दार्शनिकीनां सर्वासामपि ज्ञेयानां सामग्रीणां विश्लेषणमत्रेतरविश्वकोश-दुर्लभमेतदीयं वैशिष्ट्यं भविष्यति।यदाऽयं विश्वकोशः समाप्तिं गमिष्यति, तदाऽतिविशालो ब्रह्मकोशोऽयं भविष्यतीत्यत्र न संशयकणिका।

यद्यप्ययं वाङ्मयविश्वकोशः संस्कृतरचना,संपादकाः सर्वे सांस्कृतस्यैव पाण्डित्यस्योन्नते स्तरे विराजमानाः,प्रकाशनं यत् कृतं तत् संस्कृत विश्वविद्यानिलयेन,अस्य पाठकाः संस्कृतज्ञा एव- तथापि विश्वकोश

स्यास्य पीठिका संस्कृतेतरया भाषया दत्तेति नितरां दुःखाकरम्।

अधुना किं संजातमस्या योजनाया इति न वयं विद्मः। यद्यार्थिकाः क्लेशा योजनाया एतस्या विघ्नहेतवः,तन्निवारणार्थं विश्वविद्यानिलयीयाः संबद्धा अधिकारिजनाः संप्रार्थ्यन्ते। समस्तमपि सांस्कृतं जगन्निरुद्धश्वासं सत् कोशस्यास्य प्रकटनं सकुतूहलं प्रतीक्षमाणमस्ति।

समग्रस्यापि राष्ट्रस्य गर्वं समेधयतोऽस्य ब्रह्मराशेः प्रकाशनं एतावन्तं कालं संस्कृतज्ञैरविज्ञातेषु विषयेषु व्युत्पत्त्यतिशयं कृषीष्टेत्याशास्महे।

## १९.कन्नडविवेकचिन्तामणेः संस्कृतानुवादः।

निजगुणशिवयोगी(क्रि.श.१५००)विश्वकोशाकारं स्वकीये कन्नडविवेकचिन्तामणावसृजत्। एष शिवयोगी रागतालैर्गातव्याः कृतीः विरचितवान् कैवल्यपद्धतौ। पुरातनत्रिविधि-परमानुभवबोधे-परमार्थगीता-अनुभवसार इत्येता एतत्प्रणीता अन्याः कृतयः। वीरशैवाद्वैतसिद्धान्तयोः संमिश्रणमिव भात्येतदीयासु कृतिषु दृश्यमानं दर्शनम्।

विवेकचिन्तामण्युपक्रमे 'वेदशास्त्रैर्दर्श्यमानान् विश्वविषयान् विवृणोमि' इति प्रतिज्ञाय यथाप्रतिज्ञं ग्रन्थरचनानिर्वाहमकरोत्येष शिवयोगी। दशसु परिच्छेदेषु विभक्तोऽयं ग्रन्थः। वेदवेदाङ्गोपनिषत्स्मृतिकर्मवर्णधर्मगणितप्रमाणपुराणेतिहासचार्वाकबौद्धकौलयामलशाक्तपाञ्चरात्र

वैदिकमीमांसावैशेषिकसांख्यपातञ्जलमोक्षसूत्रागमविभूतिलिङ्गमन्त्र साधनहेमकूटसृष्ट्यष्टदिग्गजराजलक्षणच्छन्दोऽलङ्कारमहाकाव्यगमकि पुण्यक्षेत्रनक्षत्रमण्डलारिष्टमोक्षादयोऽत्र निरूपिताः। ग्रन्थोऽयं मराठी भाषया सतारामण्डलान्तर्गतसिंघणापुरवासिना कान्तेश्वरेण(क्रि.श. षोडशे शतके),तमिळुभाषया शिवप्रकाशेन(क्रि.श.सप्तदशे शतके )संस्कृत भाषया च हरपुरनिवासिना लिङ्गराजेन(क्रि.श.अष्टादशे शतके)अनूदितः। अस्मद्ज्ञानानुसारं कोऽप्यनुवादो न प्रकाशितः।

## २०.कन्नडसौगन्धिकापरिणयस्य संस्कृतानुवादः

सौगन्धिकापरिणयः कथारूपः कन्नडविश्वकोशः। शापहेतोरिन्द्रः शची च सुगन्धराज-सौगन्धिका-नामभ्यां भूलोकमवतीर्णे। अनयोर्विवाहोऽन्ते संपद्यते। स्वयंवरप्रसंगे सौगन्धिका कानिचन रत्नप्रायाणि वस्तूनि नामतो कीर्तयित्वा 'य एतान्यानयति स एव मां परिणेष्यति' इति नियमं घोषयति। सुगन्धराजस्तानि सर्वाण्यप्यानीय सौगन्धिकां परिणेष्यतीति वस्तु। अत्र प्रसंगवशात् अश्वशास्त्र-धनुर्वेद प्रभृतयः सविस्तरमुपवर्णिताः। वृक्षायुर्वेदः कामशास्त्रमित्यादिकं सर्वमत्र समस्ति। ग्रन्थेऽस्मिन् महाघोरो दोषो वाक्यदैर्घ्यातिरेकः।

संस्कृतभाषया ग्रन्थस्यास्यानुवादो विहित इति ज्ञायते। अस्य कर्ता श्रीनाडाख्ये वंशे जातः श्रीकृष्णशर्मा। एष श्रीनिवासाख्येन कविना विरचिते कृष्णराजप्रभावोदयाख्ये पद्यकाव्ये भावबोधकलिकाख्यां

व्याख्यां विरचितवान्। व्याख्याया एतस्या रचनातः प्रागेष संस्कृतभाषया सौगन्धिकापरिणयं तथा मदालसापरिणयनाटकं चारचयदिति विज्ञायते। (तथा चेमौ श्लोकावुपक्रमपद्यान्यतमौ-'सौगन्धिकापरिणयं श्रीकृष्णेन्द्रमहाकृतिम्। योऽहं संस्कृतया वाण्या प्रबन्धं तमबन्धयम्। मदालसा परिणयाभिधानं साङ्गनाटकम्। यत्कृतं तोषयत्यद्य धीरान् कृष्णेन्द्र सम्मतम्।')अयं कृष्णशर्मा स्वस्य स्थलं प्रस्तरपुरमित्याह। प्रस्तरपुरमिति शब्दः कन्नडभाषयाऽनूदितः सन् कल्लूरु इत्यर्थं जनयति। कल्लूरुनामधेयौ द्वौ ग्रामौ स्तः। प्रथमः कर्णाटकस्य धारवाडमण्डलेऽन्तर्गतः। द्वितीयस्तु आन्ध्रप्रदेशस्य खम्मं-मण्डलेऽन्तर्गतः। उभयत्र ग्रन्थस्यास्यान्वेषणं संशोधकैः करणीयम्।

## २१.पर्यायपदकोशानां विश्वकोशत्वं संभवति वा

यद्यपि अमरसिंहयादवप्रकाशहेमचन्द्रादिप्रणीतानां पर्यायपद कोशानां नामलिङ्गानुशासनवैजयन्त्यभिधानचिन्तामण्यादीनां नामानि विश्वकोशग्रन्थनामपट्टिकाबहिर्भूतानि केचन मन्येरंस्तथापीदमाकलनीयं-यत्-कोशेष्वेतेषु अर्थदृष्ट्या परस्परेणोपसर्पतां भानुसूर्यादिपर्यायशब्दानां योजनस्य प्राधान्येऽपि तत्तद्विषयानुगुण्येन शब्दानां स्थापनं पठितॄणां जनानां तत्तद्विभागसंबन्धाध्ययने महान्तं व्युत्पत्तिविशेषमादधाति। अपि च नामलिङ्गानुशासनाभिधानचिन्तामण्योर्व्याख्यासु दृष्टिपातेन जायमाना व्याकरणीयव्युत्पत्त्यवगतिसहकृता तत्तच्छब्दार्थविषयव्युत्पत्त्यवगतिः

प्रसिद्धा। वैजयन्तीकोशस्य व्याख्यावत्त्वं यद्यप्यश्रुतं तथापि मूलमात्रस्य तस्य पठनेन लभ्यो विषयबोधो नैवाल्पः। तस्मात् कारणादेतादृशानां शब्दकोशानां विश्वकोशप्रपञ्चाद् बहिर्निष्कासनं न साध्विति मनीषाऽस्मदीया। कथंभूताऽत्र दृग् दोषज्ञानामिति कुतूहलं नः।

## २२. संस्कृत विकिपीडिया

त्रिचतुराणि वर्षाण्यारब्धकार्यक्रमस्य संस्कृतविकिपीडियाख्यस्यान्तर्जालस्य। अत्र कार्यं ये कुर्वन्ति ते सर्वेऽपि सोत्साहाः संस्कृताभिमानिनश्च। वयं यथा जानीमस्तथा संस्कृतसंबद्ध एतत्सदृशो महाकार्यक्रमः कुत्रापि न प्रयतितपूर्वः। अत्र दृश्यमनानां केषाञ्चन लेखानां विषया यद्यप्यन्यभाषाविकिपीडियालेखनेष्वप्युपलभ्यन्ते तथाप्ययं श्लाघ्य उपक्रमः। इत ऊर्ध्वं सहस्रशो लेखा अन्यभाषाविकिपीडियास्थलेष्वनुपलभ्या बाढमत्रोपलप्स्यन्ते। अत्रत्येषु लेखेषु सत्यपि हृदयावर्जके वाक्यसारल्ये भाषादार्ढ्यशुद्धिभ्यां दीयमानमवधानमधिकतरं भूयादिति संस्कृतज्ञानाम् आशीः।

# उपसंहारः

संस्कृतविश्वकोषानधिकृत्य यथाशक्ति कथितमस्माभिः। परन्तु न संतोष एतावता नः। 'अहं जानाम्यमुं विचारम् एतद् वस्तु वा। एतदधिकृत्य संस्कृतेन लेखं ग्रन्थं वा रचयामि' इतीत्थंभूतलक्षणायाः प्रवृत्तेः संस्कृतज्ञेषु प्रायिकादभावात् संस्कृतेतराभिर्भाषाभिर्विशिष्येङ्ग्लीष् भाषया प्रत्यहं सृज्यमानः प्रबन्धानां ग्रन्थानां वा हिमालयोपमो राशिः संस्कृतक्षेत्रे प्राप्नोति जन्मेति कल्पना स्वप्नेऽप्यनूह्या। कौटिल्य सोमेश्वरवराहमिहिरादीन् त्रिचतुरान् ग्रन्थकर्तॄन् मुक्त्वा, स्वयं विज्ञातेषु विविधेषु लौकिकेषु विषयेषु लेखनीव्यापारव्यग्राः ग्रन्थकारा न सन्ति संस्कृत इत्येतत् सत्यम्। यद्यपि तारानाथराधाकान्तयोर्व्याकरणादिषु शास्त्रेषु विद्वत्त्वं विस्मयावहमित्यत्र नास्ति संशयकणिका। परन्तु तदीययोः कोशयोः साम्राज्यमुद्धृतानामेव ग्रन्थभागानाम्।

आधुनिकान् विश्वकोशकारान् कियत्याचिन्मात्रयोपमिन्वन् संस्कृत कोशकारो वेङ्कटरङ्गाचार्य एकलः।

'गज' इति शब्दश्रवणानुपदं 'गजायुर्वेदः संस्कृतेऽस्ति। तस्मिन् प्रबन्धं लिखामि। विद्वज्जनानां पुरस्तात् सभायां तं प्रबन्धं पिपठिषामि' इति झटिति गजायुर्वेदेऽतीवाभिमानं दर्शयन्तः संस्कृतज्ञाः (स्याँन्स्क्रीट् पण्डिताः)प्रकामं दृक्पथपथिकीभवन्ति ; न तु पुनः 'गजम् उपसर्पामि, हस्तिपकैः साकं संभाष्य गजपालने क्लेशान् जिज्ञासे, हस्तिपकैः संभाषणात् प्राप्तं ज्ञानं तद्विषयकस्य संस्कृतप्रबन्धस्य लेखने विनियुनज्मि'

इति भावनया प्रवर्तमानाः।

प्रथमकोटौ विजृम्भमाणा जना गजायुर्वेदसंबद्धान् प्रबन्धान् रिरचयिषन्ति। द्वितीयकोटौ सोत्साहा जनास्तु सोमेश्वर इव गजविषयकाणि 'जगदाचार्यपुस्तकानि' सिसृक्षन्ति-सृज्यासुः।

अत्र संस्कृतविकिपीडिया कियत्या मात्रया प्रेरणां दद्यात् ? पश्यामस्तावत्।

# धनुर्वेदः[१]।

## साम्राज्यलक्ष्मीपीठिकातः समुद्धृतः

संपादकौ-के.वासुदेवशास्त्री, के.एस्.सुब्रह्मण्यशास्त्री च।

**पटलसंख्या-१३५.चापादिलक्षणस्वरूपनिरूपणम्।**

१.पदातिलक्षणं देव ! श्रुतं त्वन्मुखपङ्कजात्।
इदानीं श्रोतुमिच्छामि चापाद्यायुधलक्षणम्॥
२.शराणाञ्चैव लक्ष्यस्य धानुष्कस्य विशेषतः।
तत्सर्वं वद देवेश ! यद्यस्ति करुणा मयि ॥
३.देवि ! सम्यक् त्वया प्रश्नः कृतो लोकहितेच्छया
उत्तरं ते प्रवक्ष्यामि सादरं शृणु भामिनि ! ॥
४.सर्वायुधमहामात्रं समस्तारिनिषूदनम्।
चापमेवायुधं प्राहुर्धनुर्वेदविशारदाः॥
५.चापः सद्वंशसंभूतस्सद्गुणः पर्ववान् सदा।
अहो कोटिद्वयाढ्योऽपि दूरं क्षिपति मार्गणान्॥
६.तादृग्गुणस्स वै तस्य विक्षेपे विदुषां पुनः।
कथं कमलपत्राक्षि ! नोपपद्येत कौशलम्॥

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

* Courtesy:Tanjore Saraswathi Mahal Library

१.प्रकटितायां साम्राज्यलक्ष्मीपीठिकायां बहुत्र-पूर्वश्लोकानामुत्तरार्धत्वेन मुद्रिता भागा उत्तरश्लोकानां पूर्वार्धानि वस्तुतः,तथैवोत्तरश्लोकानां पूर्वार्धत्वेन मुद्रिता भागाश्च पूर्वश्लोकानाम् उत्तरार्धानि।(रामायणं पठितॄणामप्येवंलक्षणोऽनुभवो बहुत्र भवति ) अत्रास्माभिः किमपि परिवर्तनम् अकृत्वा तथैव दत्तं यथैव प्रकाशितम्।
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

७.तस्माच्चापात् परं क्रूरमायुधं नास्ति भूतले।
अतः संपादितव्यस्ते पार्थिवैर्जयकाङ्क्षिभिः॥
८.चापस्तु द्विविधः प्रोक्तो दैवो मानुष इत्युमे !।
उत्तमो देवचापस्स्यान्निकृष्टो मानुषः प्रिये॥
९.सार्धैस्तु पञ्चभिर्हस्तैरायतो नवपर्वयुक्।
सप्तपर्वाऽथ वा सुज्यश्चापो दैव इतीरितः॥
१०.चतुर्हस्तायतो देवि ! त्रिपर्वा पञ्चपर्ववान्।
सप्तपर्वान्वितो वापि सद्गुणो मानुषस्स्मृतः॥
११.पुरा कृतयुगे देवि ! दैवश्चापो मया धृतः।
मत्तः परशुरामेण धृतस्त्रेतायुगे पुनः॥
१२.राघवेण धृतो देवि ! रावणस्य वधाय वै।
द्वापराख्ये युगे रामाज्जामदग्न्यान्महाबलात्॥
१३.धृतस्तु द्रोणविप्रेण तस्मात् पार्थेन धारितः।
तस्मात् सात्यकिना देवि ! धृतो नान्यैर्नृपैर्धृतः॥
१४.अहङ्कृते(?)तिनिपुणस्त्रेतायां रघुनन्दनः।
द्वापराख्ये युगे द्रोणो दैवचापे वरानने ! ॥
१५.अन्ये तु पृथिवीपाला ययातिनहुषादयः।
मानुषेणैव चापेन ह्यजयन्नखिलानरीन्॥
१६.कथं कलियुगे राज्ञां दैवचापाधिकारिता।
तस्मादार्यैर्नृपैर्धार्यश्चापो मानुष एव हि॥
१७.चतुःपर्व च षट्पर्व चाष्टपर्व धनुस्त्यजेत्।

अतिजीर्णमपक्वं च जातिदुष्टमथैव च॥
१८.अपक्वं भङ्गमाप्नोति कार्कश्यं त्वतिजीर्णकम्।
जातिदुष्टेन धनुषा बान्धवैः कलहो भवेत्॥
१९.शोकमोहकरं देवि ! समपर्वधनुः स्मृतम्।
गलग्रन्थिसमायुक्तं धनहीनकरं धनुः॥
२०.एभिर्दोषैर्विनिर्मुक्तं तस्माद् धार्यं धनुर्नृपैः।
एतदेव धनुर्दिव्यं मानुषं च महर्षयः॥
२१.कोदण्डमिति देवेशि ! कथयन्ति करस्थितम्।
शार्ङ्गं पुनर्धनुर्दिव्यं विष्णोः परममायुधम्॥
२२.वितस्तिभिः सप्तभिर्यदायतं च नतं त्रिधा।
सर्वलक्षणसंयुक्तं निर्मितं विश्वकर्मणा॥
२३.न स्वर्गे न च पाताले न भूमौ वापि कस्यचित्।
करे तद्वशमायाति मुक्त्वैकं पुरुषोत्तमम्॥
२४.पुराऽनेनैव धनुषा हरिराजौ सुमालिनम्।
मालिनं माल्यवन्तं च तूर्णं समजयत् प्रिये ! ॥
२५.वितस्तिभिस्सार्धषड्भिरायतं शार्ङ्गमद्रिजे !।
मानुषं तु विजानीयात् सर्वशत्रुक्षयोचितम्॥
२६.प्रायो भोज्यं धनुश्शार्ङ्गं गजारोहाश्वसादिनाम्।
रथिनां च पदातीनां वांशं धनुरुदीरितम्॥
२७.गुणानां लक्षणं वक्ष्ये नानारूपं हिमाद्रिजे !।
पट्टसूत्रैर्गुणः कार्याः कनिष्ठाङ्गुलसम्मितः॥

२८.धनुःप्रमाणो निस्सन्धिस्सम्यक् त्रिगुणतः प्रिये !।
तदभावे हरिण्या वा महिषाणां गवामपि॥
२९.स्नायुभिर्वा गुणः कार्यस्तदभावे नृलोमभिः।
तदभावे पक्ववंशत्वचा वा कारयेद् गुणम्॥
३०.अर्कवृक्षत्वचा वाऽपि कुर्याद् गुणमगात्मजे !।
शराणां लक्षणं वक्ष्ये यथावदनुपूर्वशः॥
३१.स्थूलं न चातिसूक्ष्मं च न पक्वं न कुभूमिजम्।
हीनग्रन्थि विदीर्णं च वर्जयेदीदृशं शरम्॥
३२.पूर्णग्रन्थि सुपक्वं च कठिनं वर्तुलं प्रिये !।
काण्डं धन्वी प्रगृह्णीयात् सूक्ष्मवंशसमुद्भवम्॥
३३.कङ्कहंसशुकानां च पक्षा दक्षाश्च केकिनाम्।
हंसानां कुरराणां च पक्षाश्चैव सुशोभनाः॥
३४.एकैकस्य शरस्यैव चतुःपत्राणि योजयेत्।
षडङ्गुलप्रमाणेन पक्षभेदं च कारयेत्॥
३५.एवं वांशस्य चापस्य मार्गणे परिकल्पयेत्।
दशाङ्गुलमिताः पक्षाश्शार्ङ्गचापस्य मार्गणे॥
३६.त्रिविधास्तु शराः प्रोक्ताः पुंस्त्रीषण्डप्रभेदतः।
अग्रे स्थूला भवेन्नारी पश्चात् स्थूलो भवेत् पुमान्॥
३७.समं नपुंसकं विद्यात् तत्तत्कार्यं च वक्ष्यते।
दूरपातो युवत्याः स्यात् पुरुषाद् दृढभेदनम्॥
३८.नपुंसकात् स्वल्पभेद इत्येवं निर्णयस्त्रिधा।

धारामुखः क्षुरप्रश्च गोपुच्छश्चार्धचन्द्रकः॥
३९.सूचीमुखश्च भल्लश्च वत्सदन्तो द्विभल्लकः।
विकर्णः काकतुण्डश्चेत्येवं भेदा दशेरिताः॥
४०.धारामुखेन चर्मैकं क्षुरप्रेण च कार्मुकम्।
सूचीमुखेन कवचमर्धचन्द्रेण मस्तकम्॥
४१.भल्लेन हृदयं छिन्द्याद् द्विभल्लेन गुणं शरम्।
लौहं तु काकतुण्डेन लक्ष्यं गोपुच्छकेन च॥
४२.स्वस्वनामसमाकारा भवेयुश्चाप्यमी शराः।
सर्वलोहाश्च ये बाणा नाराचास्ते प्रकीर्तिताः॥
४३.पञ्चभिः पृथुलैः पक्षैर्युक्ताः सिद्ध्यन्ति संगरे।
नालीका लघवो बाणा नलकाण्डविनिर्मिताः॥
४४.अत्युच्चदुर्गपातेषु धर्मयुद्धेषु ते मताः।
अमी सर्वे शराः कार्या रुक्मपुङ्खाश्च चित्रिताः॥
४५.जाम्बूनदमयैः पट्टैस्सूक्ष्मैर्धातुभिरेव वा।
स्वस्वनामाक्षरैश्शश्वच्चिह्निताश्च वरानने ! ॥
४६.कर्तव्याः परबोधार्थम् 'इमे तस्य शरा' इति।
पिप्पलीं सैन्धवं कुष्ठं गोमूत्रेण विलेपयेत्॥
४७.सल्लिँप्तांश्च ततो बाणानग्नौ किञ्चित् प्रतापयेत्।
अभेद्यमपि भेद्यं स्याच्छरैर्लिप्तौषधैर्भृशम्॥
४८.अथ वक्ष्ये लक्ष्यलक्ष्म यथावदनघे तव।
लक्ष्यं तु त्रिविधं ज्ञेयं चलं चाचलमद्रिजे ! ॥
४९.चलाचलं च क्रमशो धनुर्वेदविशारदैः।

येन लक्ष्यं चलं शश्वदचलेन धनुष्मता॥
५०.भिद्यते सोच्यते सद्भिश्चलवेधीति भूतले।
यो भिनत्त्यचलं लक्ष्यं चलस्सन् स्वयमद्रिजे ! ॥
५१.सोच्यते चलवेधीति धनुर्वेदविशारदैः।
चलाचलं तु यल्लक्ष्यं यस्स्वयं च चलाचलः॥
५२.भिनत्त्येकेन बाणेन स चलाचलभेदकः।
[ऊर्ध्वविदी गदायुद्धे स्वर्गं प्राप्नोत्यनुत्तमम्॥
५३.निरयं नाभ्यधोवेधी पादवेधी च रौरवम्[१]]
एकोऽपि यत्र नगरे प्रसिद्धस्स्याद् धनुर्धरः॥
५४.ततो यान्त्यरयो नूनं मृगास्सिंहगृहादिव।
ब्राह्मणेन धनुर्धार्यं खड्गं तु क्षत्रियेण वै॥
५५.वैश्येन धार्यते कुन्तं गदा शूद्रेण धार्यते।
तस्मादावश्यकतया साम्राज्यस्थैर्यसिद्धये॥
५६.संपादनीयाश्चापाद्याः पार्थिवैर्जयकाङ्क्षिभिः।
इत्येवं ते समाख्यातं चापबाणादिलक्षणम्॥
लक्ष्यधानुष्कयोश्चापि किमन्यच्छ्रोतुमिच्छसि ?॥

**इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां चापादिस्वरूपनिरूपणं नाम पञ्चत्रिंशदुत्तरशततमः पटलः।**

**अथ षट्त्रिंशदुत्तरशततमः पटलः**

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

१.अत्र संपादकीया टिप्पणी-अयं श्लोकः प्राक्तनमातृकासु न दृश्यते।
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

## पटलसंख्या-१३६.धानुष्कश्रमस्वरूपनिरूपणम्

१.पार्वती-देव ! देव ! विरूपाक्ष ! श्रुतं चापादिलक्षणम्।
सर्वाश्चिर्यकरं सम्यक् त्वन्मुखाम्भोजतो मया॥
२.इदानीं श्रोतुमिच्छामि धानुष्केण श्रमः कथम् ।
कर्तव्यः ? करुणासिन्धो ! वद मे वदतां वर ! ॥
३.साधु साधु जगत्पूज्ये ! यन्मां त्वं परिपृच्छसि।
तत्तेऽहं सम्प्रवक्ष्यामि शृणुष्व सुसमाहिता॥
४.पुरतो वर्तमानस्य लक्ष्यस्य बहुधा शितैः।
शरैराकर्णमाकृष्टैर्भेदनं यत् तदद्रिजे ! ॥
५.श्रम इत्युच्यते पुम्भिर्धनुर्वेदविशारदैः।
श्रम एव परं श्रेयः श्रम एव परं बलम्॥
६.श्रम एव परा कीर्तिर्धानुष्कस्य विशेषतः।
तस्मादवश्यं धानुष्को भवेच्छ्रमपरिश्रमः(कृतपरिश्रमः ?) ॥
७.प्रत्यहं प्रयतः प्रातः सायं च वरवर्णिनि !।
य एकस्मिन्नपि दिने धन्वी न कुरुते श्रमम्॥
८.तस्य दृष्टिश्च मुष्टिश्च नानाकारा चलत्युमे !।
तस्मात् कृतश्रमेणैव संग्रामे प्राप्यते जयः॥
९.गुरूपदिष्टमार्गेण श्रमः कार्यो धनुष्मता।
धानुष्कस्य श्रमारम्भे भुजङ्गो यदि दृश्यते॥
१०.अथवा भज्यते चापस्त्रुटितो वा गुणो भवेत्।
श्रमं तत्र न कुर्वीत यदीच्छ्रेय आत्मनः॥

११.चन्द्रहीना यथा रात्रिः पुष्पहीना यथा लता।
तथैव श्रमहीनाऽपि धनुर्विद्या वरानने ! ॥
१२.स्थानानि पञ्च वक्ष्यामि धानुष्कस्य यथाक्रमम्।
आलीढमादिमं स्थानं प्रत्यालीढमनन्तरम्॥
१३.विशाखं दर्दुरं चैव गारुडं चैव पञ्चमम्।
विन्यस्याग्रे वामपादं पश्चादाकुञ्च्य दक्षिणम्॥
१४.आलीढं तु प्रकर्तव्यं  समीपशरपातने।
प्रत्यालीढे प्रकर्तव्यं दक्षिणं पुरतः पदम्॥
१५.वामं त्वाकुञ्चितं कार्यं सुदूरशरपातने।
पादौ सविस्तरौ कृत्वा समौ हस्तप्रमाणतः॥
१६.विशाखस्थानकं कार्यं  कूटलक्ष्यविभेदने।
कृत्वा चैव समौ पादौ निष्कम्पौ च सुसङ्गतौ॥
१७.वपुराकुञ्च्य चोरू द्वौ जानुनीं धरणीं गते।
कृत्वा कार्यं दर्दुराख्यं स्थानं कण्टकभेदने॥
१८.सव्यं जानुगतं भूमौ दक्षिणं चैव कुञ्चितम्।
कृत्वाऽग्रतस्तु वै कुर्याद्  गारुडं दृढभेदने॥
१९.मुष्टयः पञ्च कथिताः शरसन्धानकर्मणि।
पताका वज्रमुष्टिश्च सिंहकर्णा तथैव च॥
२०.मत्सरी काकतुण्डी च तल्लक्षणमिहोच्यते।
दीर्घा तु तर्जनी यत्र ह्याश्रिताङ्गुष्ठमूलका॥
२१.पताका सा तु विज्ञेया नालीकशरमोक्षणे।

तर्जनीमध्यमामध्यमङ्गुष्ठो विशते यदि॥
२२.वज्रमुष्टिश्च सा ज्ञेया स्थूलतारा च मोक्षणे।
अङ्गुष्ठनखमूले च तर्जन्यग्रं सुसंस्थितम्॥
२३.सिंहकर्णा तु विज्ञेया वत्सदन्तविमोक्षणे।
अङ्गुष्ठनखमूले तु तर्जन्यग्रं सुसंस्थितम्॥
२४.मत्सरी नाम सा ज्ञेया चित्रलक्ष्यस्य वेधने।
अङ्गुष्ठाग्रे तु तर्जन्या मुखं यत्र निवेशितम्॥
२५.काकतुण्डा तु सा ज्ञेया सूक्ष्मलक्ष्यनिपातने।
योज्यालीढे पताकाख्या प्रत्यालीढे तु पार्वति ! ॥
२६.वर्जमुष्टिर्विधातव्या विशाखे सिंहकर्णिका।
मत्सरी दर्दुरे योज्या गारुडे काकतुण्डिका॥
२७.एवमासनभेदेषु मुष्टिभेदा निरूपिताः।
उदिते भास्करे लक्ष्यं प्रत्यग्निदिशि निक्षिपेत्॥
२८.अपराह्णे तु कर्तव्यं लक्ष्यं पूर्वदिगाश्रितम्।
उदग्दिशि सदा कार्यां प्रशस्तं लक्ष्यमद्रिजे ! ॥
२९.संग्रामेण विना कार्यं न लक्ष्यं दक्षिणामुखम्।
षष्टिहस्तान्तरं लक्ष्यमुत्तमं परिकीर्तितम्॥
३०.चत्वारिंशत्करैर्मध्यमधमं स्यात् तदर्धतः।
क्रियाकलापान् वक्ष्यामि श्रमसाध्यान् शुचिस्मिते ! ॥
३१.येषां विज्ञानमात्रेण सिद्धिर्भवति धन्विनाम्।
प्रथमं चापमालोक्य चूलिकां बन्धयेत् ततः॥

३२.स्थानकं तु ततः कुर्याद् बाणं परिकरं न्यसेत्।
तोलनं धनुषश्चैव कर्तव्यं वामपाणिना॥
३३.आदानं च ततः कृत्वा संधानं च ततः परम्।
सकृदाकृष्टचापेन लक्ष्यवेधं तु कारयेत्॥
३४.कुम्भकेन स्थितं कृत्वा हुंकारेण विसर्जयेत्।
इत्यभ्यासक्रिया कार्या धन्विना सिद्धिमिच्छता॥
३५.षण्मासात् सिद्ध्यते मुष्टिः शरास्संवत्सरेण तु।
नाराचास्तस्य सिद्ध्यन्ति प्रसन्नोऽहं यदा तदा॥
३६.पुष्पवद्धारयेद् बाणं सर्पवत् पीडयेद् धनुः।
धनवल्लक्षयेल्लक्ष्यं यदीच्छेत् सिद्धिमात्मनः॥
३७.प्रथमं वामहस्तेन यश्श्रमं कुरुते नरः।
तस्य चापक्रियासिद्धिरचिरादेव जायते॥
३८.वामहस्ते तु संसिद्धे दक्षिणेनारभेत् ततः।
उभाभ्यां च श्रमं कुर्यान्नाराचैश्च शरैस्तथा॥
३९.चतुश्शतैश्च काण्डानां यो हि लक्ष्यं निपातयेत्।
सूर्योदये चास्तमये स श्रेष्ठी धन्विनां भवेत्॥
४०.त्रिशतैर्मध्यमः प्रोक्तो द्विशताभ्यां कनिष्ठकः।
ऊर्ध्ववेधी भवेच्छ्रेष्ठो नाभिवेधी च मध्यमः॥
४१.पादवेधी कनिष्ठः स्यादिति निर्णीतमद्रिजे !।
पूर्वापरौ समौ कार्यौ समांशौ निश्चलौ करौ॥
४२.चक्षुषी स्पन्दयेन्नैव दृष्टिं लक्ष्ये नियोजयेत्।

मुष्टिनाच्छादितं लक्ष्यं शरस्याग्रे नियोजयेत्॥
४३.मनो दृष्टिगतं ज्ञात्वा ततः काण्डं विसर्जयेत्।
एवं चेदाशुगो देवि ! लक्ष्यान्न स्खलति ध्रुवम्॥
४४.आदानं चैव तूणीरात् संधानं कर्षणं तथा।
क्षेपणं च त्वरायुक्तो बाणस्य कुरुते तु यः॥
४५.नित्याभ्यासवशात् तस्य शीघ्रसंधानता भवेत्।
उदग्गा दक्षिणा चैव ऊर्ध्वगाऽधोमुखी तथा॥
४६.चतस्रो गतयः प्रोक्ता बाणस्खलनहेतवः।
कम्पते गुणमुष्टिस्तु मार्गणस्य हि पृष्ठतः॥
४७.सम्मुखस्स्याद्धनुर्मुष्टिस्तदा सौम्या गतिर्भवेत्।
ग्रहणे शिथिलं यस्य ऋजुत्वेन विवर्जितम्॥
४८.पार्श्वं तु दक्षिणं याति सायकस्स न संशयः।
ऊर्ध्वं भवेच्चापमुष्टिर्गुणमुष्टिरधो भवेत्॥
४९.स मुक्तो मार्गणो लक्ष्यादूर्ध्वं याति न संशयः।
मोक्षणे चैव बाणस्य चापमुष्टिरधो भवेत्॥
५०.गुणमुष्टिर्भवेदूर्ध्वं तदाऽधोगामिनी गतिः।
लक्ष्यबाणाग्रदृष्टीनां संगतिस्तु यदा भवेत्॥
५१.तदानीमुज्झितो बाणो लक्ष्यान्न स्खलति ध्रुवम्।
निर्दोषश्शब्दहीनश्च सममुष्टिद्वयस्थितः॥
५२.भिनत्ति दृढवेध्यानि सायको नात्र संशयः।
स्वाकृष्टस्तेजितो यस्तु सुशुद्धो गाढमुष्टिगः॥

५३.नरनागाश्वकायेषु न स तिष्ठति मार्गणः।
अयश्चर्मघटं चैव मृत्पिण्डं च चतुष्टयम्॥
५४.यो भिनत्ति हि तस्येषुर्वज्रेणापि न धार्यते।
सार्धाङ्गुलप्रमाणेन लोहपात्राणि कारयेत्॥
५५.तानि भित्त्वैकबाणेन दृढघाती भवेन्नरः।
चतुर्विंशतिचर्माणि यो भिनत्तीषुणा नरः॥
५६.तस्य बाणो गजेन्द्रस्य कायं निर्भिद्य गच्छति।
भ्राम्यज्जले घटो वेध्यश्चक्रे मृत्पिण्डकं तथा॥
५७.यथाभ्रमं तु वेधी चेद् भ्रमवेधी स उच्यते।
अयस्तु काकतुण्डेन चर्म धारामुखेन च ॥
५८.मृत्पिण्डं च घटं चैव विद्ध्येत् सूचीमुखेन तु।
बाणभङ्गकलावर्तकाष्ठभेदनमेव च ॥
५९.बिन्दुकं गोळकयुगं यो वेत्ति स जयी भवेत्।
लक्ष्यस्थाने धृतं काण्डं सम्मुखं भेदयेत्तु यः॥
६०.किञ्चिन्मुष्टिं विधाय स्वां तिर्यग्विफलितेषुणा।
सम्मुखं वा समायान्तं तिर्यग् वाऽऽयान्तमम्बरे॥
६१.शरं शरेण यश्छिन्द्याद् बाणवेधी स जायते।
काष्ठे च केशं संयम्य तत्र बध्वा वराटकम्॥
६२.हस्तेन भ्राम्यमाणं तं यो विध्येद् भ्रमवेध्यसौ।
लक्ष्यस्थाने न्यसेत् काष्ठं देवि ! गोपुच्छसन्निभम्॥
६३.यश्छिन्द्यात्तु क्षुरप्रेण काष्ठवेधी स उच्यते।

लक्ष्ये बिन्दुं न्यसेच्छुभ्रे रक्तं बन्धूकपुष्पवत्॥
६४.हन्ति तं बिन्दुकं यस्तु बिन्दुवेधी स जायते।
काष्ठे गोलयुगं क्षिप्त्वा प्रान्तयोः पद्मलोचने॥
६५.शरयुग्मेण यश्छिन्द्यात् तद्युग्ममतिवेगतः।
स युग्मवेधी कथितः पूजितः सर्वपार्थिवैः॥
६६.रथस्थेन हयस्थेन गजस्थेन च धन्विना।
धावता वै श्रमः कार्यो लक्ष्यं हन्तुं सुनिश्चितम्॥
६७.मण्डलभ्रमणैश्चित्रै[१]स्तथैव च गतागतैः।
सव्यापसव्यगतिभिर्गोमूत्रगतिभिः पुनः॥
६८.धानुष्केण श्रमः कार्यो लक्ष्यसल्लँग्नदृष्टिना।
अष्टमी चाप्यमावास्या पूर्णिमा च चतुर्दशी॥
६९.वर्जनीया प्रयत्नेन धन्विना श्रमकर्मणि।
अनध्यायदिने देवि ! धानुष्केण कृतश्श्रमः॥
७०.अनर्थाय भवेत् क्षिप्रं नास्ति नास्त्यत्र संशयः।
तस्माच्छुभेषु दिवसेष्वनुकूलेषु चात्मनः॥
७१.अध्येतव्यो धनुर्वेदः सावधानेन चेतसा।
इत्येवं ते समाख्यातं श्रमकर्म यथाक्रमम्॥
संग्रहेण सरोजाक्षि ! किमन्यच्छ्रोतुमिच्छसि ?॥

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

१.अत्र संपादकीया टिप्पणीः-"-'मण्डलभ्रमणैर्देवि' इति प्राक्तन मातृकासु पाठः"।
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

**इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां धानुष्कश्रमाभ्यासस्वरूपनिरूपणं नाम षट्त्रिंशदुत्तरशततमः पटलः।**

# अश्वः

परवस्तुवेङ्कटरङ्गाचार्यः

**अश्वः**-कुमुदादिः, पर्वादिः, वंशादिः,निष्कादिः, शुभ्रादिः, हस्त्यादिः, अश्वादिः (अश्व-क्वन्)पु. प्रसहमृगविशेषः। तत्पर्यायाः-घोटक-वीति-पीति-तुरग-तुरङ्ग-तुरङ्गम-वाजिन्-वाह-अर्वन्-गन्धर्व-हय-सैन्धव-सप्ति-तार्क्ष्य-कुदुर-तुक्खार-पाकल-जहूराण-धाराट-खेङ्खोल-प्रकीर्ण-कल्किन्-शालिहोत्र-हरिक्रान्त-मुद्गभुज्-श्रीपुत्र-चामरिन्-हेषिन्-राजस्कन्ध-मरु द्द्व-वातायन-एकशफ-रथ्य-एतदर्थकशब्दाश्च।[आन्ध्र] गुर्रमु।

अश्वशब्दस्य क्यचि परे मैथुनेच्छायामसुगागमः।अश्वस्यति वडवा।तस्मात्तद्धिता यथा-तस्य समूह इत्यर्थेऽण्, छ इत्येतौ।आश्वम्, अश्वीयम्। स्वार्थे प्रवृत्तिनिमित्ततनुत्वे प्रागिवीयष्टरच्[१]-अश्वतरः। तस्यैकाहगम इत्यर्थे खञ्-आश्विनः।अश्वशब्दस्य बडवाशब्देन सह द्वन्द्वे पूर्वलिङ्गता। एकवद्भावस्तु वा। अश्वबडबम्।अश्ववडवौ।

अश्वानां वर्णिविशेषकृतनामविशेषा हेमचन्द्राद्युक्ता यथा-श्वेतवर्णः कर्मः काकाह इत्युच्यते। श्वेतपिङ्गलः खङ्गाह इति।पीयूषवर्णः

---

१.ष्टरच्प्रत्ययो 'वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे (अष्टा.५.३.९१)'इति शास्त्रेण। 'तद्धितेषु प्रागिवीया'इति विभागः सिद्धान्तकौमुद्यां कल्पितो यदाधारेणात्र प्रागिवीयष्टरजित्युक्तम्।अत्र 'प्रागिलीय'इति प्रमादा न्मुद्रितम्।

सेराह इति, पीतवर्णो हरिय इति,कृष्णवर्णः खङ्गाह(?) इति,लोहितवर्णः क्रियाह इति,नीलवर्णो नीलक इति, कपिलवर्णस्त्रियाह इति, स एव पाण्डुकेसर पुच्छश्चेत् ओल्लाह इत्युच्यते।ईषत्पाण्डुः कृष्णजङ्घः कुलाह इत्युच्यते।गर्दभवर्णः सुरूहक इति, पाटलवर्णो वोरूखान इति, ईषत्पीतो जानुनि कृष्णवर्णः कुलाह इति।पीतरक्तच्छाय उकनाह इति, कृष्णरक्तवर्णः क्वचिदुकनाह इत्युच्यते।कोकनदाभः शोण इत्युच्यते।पीतहरितवर्णो हरित इति हालक इति चोच्यते। श्वेतकाचवर्णः पङ्गुल इत्युच्यते।चित्रवर्णो हलह इत्युच्यते।अश्वमेधार्होऽश्वो ययुरित्युच्यते।

अश्वस्त्री वडवा।बालाश्वः किशोरः।वेगाधिकोऽश्वो जवनः। रथस्य वोढा रथ्यः। कुलीन आजानेयः।सिन्धु-वनायुज-पारशीक-काम्भोज-बाह्लीकादिदेशोद्भवा अश्वाः सैन्धव-वानायुज-पारशीक-काम्भोज-बाह्लीकादिशब्दैर्व्यवह्रियन्ते।

विनीतोऽश्वः साधुवाही, दुर्विनीतः शूकलः।कशार्हः कश्यः।अश्व-ताडनदण्डः कशा।अश्वग्रहणपाशः प्रग्रहः।अश्वमुख यन्त्रणरज्जुः खलीनम्।पादपाशो दाम। अश्वेनैकदिनेन यद्गम्यते तदाश्वीनम्।

उत्पत्तिकृता अश्वजातिभेदाः सप्त-अमृतजः,बाष्पजः, अग्निजः,देवजः,अण्डजः,गर्भजः,सामजश्चेति।पुरा किल समुद्रमथन कालेऽमृतेन सह तत उत्पन्न उच्चैश्रवा नामाश्वोऽमृतजः।अग्नौ जुह्वतो

ब्रह्मणो मुखोत्पन्नाद् बाष्पादुत्पन्नो बाष्पजः। तेनैव हूयमानादग्ने र्जातोऽग्निजः। इन्द्रादि-दिक्पालकेभ्यस्तत्तद्दिक्षु जनिता देवजाः। अश्रु प्रजापति(?)र्लक्ष्मीश्च तपोवनसमीपे परस्परशापादुलूको मृगी च जातौ। ताभ्यामुत्पन्नादण्डाज्जाता अण्डजाः। अश्वबडबयोगजाता गर्भजाः। ब्रह्मणा साम्न उत्पादिताः सामजाः।

अश्वाः सुग्रीवीपुत्रा इति, लक्ष्मीपुत्रा इति,गन्धर्वीपुत्रा इति च पुराणेषु दृश्यते।

खराश्वसंकरजाता अश्वतरादयः खरजातयः।

अश्वाः किल पुरा सपक्षाः खेचरा अभूवन्। शुक्रेण नियुक्तः शालिहोत्रो नाम मुनिरेतेषां पक्षानिषीकास्त्रेण चिच्छेद। स च तैः प्रसादितस्तेभ्यो वरं ददौ। युष्माकं पक्षगतो वेगः पादेषु भविष्यतीति। यूयमिन्द्रादिदेवानां वाहनत्वं गमिष्यथ। तथा भुवि राज्ञां च। योयो राजा भवतामन्नपानादिभिः पुष्टिं करिष्यति स सर्वत्र विजयशीलो भवतीतिच। ते च भुवमागत्य राज्ञां वाहनत्वं गताः। तेषां धर्मार्थकामोप-कारिण इति पौराणिकी गाथा।

पुनरश्वा ब्राह्मणादिजातिभेदेन चतुर्विधाः-तत्र संयताः शीलवन्तः शुद्धाचाराः श्रीमन्तो धीराः सर्वाश्वसुहृदो देवगन्धर्वसत्त्वाः शुक्लाः अरुणा मधुपिङ्गला वा उशीर-घृतलाजतुल्यगन्धा मनस्विनः स्रग्गन्ध-पायसाज्यासक्ता ब्राह्मणजातयः।

तेजस्विनो घना धीराः कोपनाः शूरा महास्वनास्तीक्ष्णा

महाकाया महाबला यक्षगन्धर्वसत्त्वाः सितासिताः सुवर्णवर्णा वा पुष्पतुल्यगन्धा मल्लिकापुष्पनेत्रा मणनेत्रा विभक्तावयवा दुःखशीलाश्च क्षत्रियजातयः।

वातातपसहाश्शान्ता भारोद्वहनक्षमाः स्थिआ हर्षसंतापहीना मध्यवेगाः पानप्रियाः पल्लववर्णाः क्रौञ्चपत्रपाटला वा आखुवानरगन्धा राक्षससत्त्वा जितेन्द्रिया वैश्यजातयः।

अप्रशस्तगुणा असदाचाराः परभुक्तोज्झिताहरभक्षणशीला अस-दाहारसेवनशीलाः पोषकानपि प्रहर्तुकामाः विच्छिन्नवृक्षनादाः वायसा-लयगन्धाः(?)पिशाचसत्त्वाः शूद्रजातयः।

ब्राह्मणादिजातयो ब्राह्मणादितत्तज्जातिभिः सहैव स्थाप्याः, न तु भिन्नजातिभिः।

अश्वानां प्रकृतिभेदा यथा-अश्वा बडबाश्च ग्रीष्मान्ते निःसार रूक्षतृणलतापत्रादिसेवनाद् वातप्राया भवन्ति।तदा तेभ्यो जाता वातप्रकृतयः।

वर्षान्ते हेमन्तादौ च सूर्यकरसंत्रस्तास्तरुणान्यपि तृणानि सेवमानाः पित्तला भवन्ति।तदा तेभ्यो जाताः पित्तप्रकृतयः।शिशिरर्तौ बलमांस-संपन्नाः पटवो महाशरीराश्च भवन्ति।तदा तेभ्य उत्पन्नाः श्लेष्म प्रकृतयो भवन्ति।

तेषां लक्षणानि यथा-विकृतो हीनो रूक्षरोमा कर्कशः कृशश्चञ्चलोऽशुचिरतिनिद्रो दुर्मेधा वातप्रकृतिरयनमन्वर्थवेदीत्युच्यते।

तीक्ष्णः शूरो जलप्रिय आरक्ततालुर्मतिमान् घस्मरोऽतिरोषः पित्तप्रकृतिः-अयमुत्तानवेदीत्युच्यते।

मन्दः सहिष्णुर्मतिमानरोगः प्रियदर्शनः श्लेष्मप्रकृतिरयं गम्भीर-वेदीत्युच्यते।

अश्वानां दशाक्षेत्रविभागो यथा-तत्र परमायुः प्रमाणं द्वात्रिंश-द्वत्सरात्मकं दशा।

तत्र दशभागाः ।तत्रैकैको भागो द्वादशदिनोत्तरमास त्रया धिकसंवत्सरत्रयात्मकः।

क्षेत्रं शरीरं तत्रापि दशभागाः।तत्र जिह्वोद्योष्ठान्तः प्रथमः। प्रपानादि(?)फालान्तो द्वितीयः।मन्यागलस्कन्धास्तृतीयः।ककुदनाकस (?)जत्रुवक्षोभागश्चतुर्थः, बाहुक्रोडे पञ्चमः,हृदयकक्षपार्श्वानि षष्ठः, पृष्ठोदरनाभिप्रदेशाः सप्तमः,कुक्षिरन्ध्रोपरन्ध्रगुह्यस्थानान्यष्टमः, ऊरु बीजरोहिणीस्थूला नवमः,खुरान्तजङ्घाचतुष्टयं दशमः।

बडबानामेत एव विभागा विपर्ययेण प्रथमद्वितीयादिक्रमेण गणनीयाः।

मुखान्तररुणाब्जदलाकारा जिह्वा ऊर्ध्वस्थितं तालु,अधः स्थितं सूनम्।

दन्तेषु व्यञ्जनदन्ता द्वादश।दंष्ट्राङ्कुराश्चत्वारः।हनुजाश्चतु र्विंशतिः।

उत्तरोष्ठाधरोष्ठश्चेति द्वावोष्ठौ। ओष्ठसन्धी सृक्विणी। अधरोष्ठाधःप्रदेशश्चिबुकम्। उत्तरोष्ठादूर्ध्वप्रदेशः प्रपानम्। तदूर्ध्वप्रदेशः प्रोथम्। प्रोथपार्श्वे नासापुटे। प्रोथनेत्रमध्यभागो घोणा। घोणापार्श्वौ वर्ती। तदुपरिभागौ क्षीरिके। नासाहनुमध्यभागौ गण्डौ। घोणागण्डमध्यभागावश्रुपातौ। नेत्रयोः पक्षान्तर्वर्तिनी शुक्लमण्डले। तन्मध्यमण्डले कृष्णमण्डले। तन्मध्ये कनीनिके। तद्बहिर्भागावपाङ्गौ। आभ्यन्तरभागौ नेत्रकूपे। नेत्राभ्यामुपरि भ्रुवौ। तदुपरि भालम्। तदुपरि स्तुपः। तदुपरि शिरः। तत्पार्श्वयोः कर्णौ। कर्णपृष्ठे विदू(?)। कर्णशंखयोरन्तराले कटौ। कटनेत्रयोरन्तराले शङ्खौ। कटशङ्खयोरन्तराले घोटौ। गण्डसमीपबाह्यभागौ हनू। कण्ठहनुमध्यं निकालः। निगालवक्षः-स्थलमध्यभागो गलः। कण्ठमूलस्थो बाहुमध्यभागः क्रोडम्। बाहू प्रसिद्धौ। बाह्वोरधोभागौ जानुनी। जानुनोरुपरिग्रन्थी किणौ। जानुनोरधःसन्निकृष्ट-भागौ पाहुत्रिके(?)। जानुनोः पुरः स्थतौ मन्दरौ। जान्वधोभागौ जङ्घे। जङ्घाबाह्यभागौ कले। जङ्घाऽधोभागौ कूर्पौ। पूर्वाधोभागौ हस्तौ। पूर्वमध्यभागौ कणौ। पूर्वाधोभागौ कुष्ठिके। कुष्ठिकाधोभागौ खुरौ। खुराग्रभागौ नखशिखे। खुरमध्यभागौ मण्डूक्यौ। पार्ष्णी प्रसिद्धौ। करमूलपृष्ठभागौ कक्षौ। बाहुमध्यस्थान्तभागः क्रोडपीठम्। क्रोडपीलो(ठो?)दरमध्यभागं हृदयम्। नाभिहृदयमध्यमुदरम्। नाभिः प्रसिद्धा। उदरपार्श्वभागौ कोष्ठे। रोमावलिः प्रसिद्धा। कक्षपृष्ठभागौ पार्श्वे। पार्श्वपृष्ठभागः कुक्षिस्फुरणम्। कुक्षिस्फुरणसमपश्चाद्भागस्थौ कुक्षुमूलप्रदेशौ रन्ध्रे। रन्ध्राधोभागावुपरन्ध्रे। कण्ठपार्श्वोपरिभागौ मन्ये। तिरोभुज

मध्यभागौ ग्रीवा।ग्रीवोपरिभागौ स्कन्धौ।केसरस्थानं केकाशी।शिरःकर्ण पृष्ठदेशौ केशान्तौ।केशान्तसमीपभागौ वहौ।वहसमीपभागौ काकसे।ते एव जत्रुणी।काकसोर्ध्वप्रदेशः ककुदम्। तदुपरिभागोंऽसः।ककुदपृष्ठ-भाग आसनम्।तदेव साद्युपवेशनस्थानम्। पृष्ठाधोभागस्त्रिकम्। त्रिकाधोभागो जघनम्। पुच्छं प्रसिद्धम्।पुच्छादधोभागो गुदम्।मुष्कगुद मध्य भाग निगूढपार्श्वभागौ भासले। भासलाधोभागौ वक्रसन्धी।वक्र सन्ध्यधोभागौ जङ्घे।वक्रसन्धिजङ्घयोर्मध्यभागौ मन्दरौ। जङ्घा बाह्यभागौ कले।जङ्घाधोभागौ कूर्चौ।कूर्चाधोभागौ पादौ।कूर्च-मध्यग्रन्थी किणौ।कूर्चाधोभागौ कुष्ठिके।कुष्ठिकाधौभागौ खुरौ।खुराग्र भागौ नखशिखे।खुरमध्यभागौ मण्डूक्यौ।पार्ष्णी प्रसिद्धौ।

अश्वानामष्टौ लक्षणानि द्रष्टव्यानि।शरीरं, वर्णः,गन्धः, स्वरः,सत्त्वं, छाया,गतिः,आवर्तश्चेति।

तत्र शरीरलक्षणं यथा-

ओष्ठौ मृदुत्वचौ वा ताम्रौ च शुभौ।जिह्वा रक्ता तन्वी च।तालु रक्तम्।दन्ता घनाः स्निग्धाः सुबद्धाः समाश्च, हनू नातिदीर्घौ नातिमृदू,नेत्रे तु सुबद्धे सुस्निग्धे, मृदुपक्ष्मणी विशाले मधुपिङ्गे प्रसन्ने च। कपिञ्जल-तुरङ्गगजक्रौञ्चटिट्टिभोष्ट्रमयूरनेत्रसदृशे [नेत्रे] ललाटं स्वावर्तं विशालं, शिर[ः] समवृत्तमावर्तद्वययुक्तं,कर्णौ ह्रस्वौ तीक्ष्णौ तनू,ग्रीवा सुदृढा कुञ्चिता दीर्घा च,केसरो जटाहीनो दीर्घः, स्कन्धः शुभावर्तो दृढः, वक्षो विशालं दीर्घं,कक्षौ दीर्घोन्नतौ,ऊरू वृत्तौ समौ,

बाहू दृढजानू, जङ्घे सुवृत्ते मांसहीने च, कूर्पं समं सुगन्धि व्रणरहितं,मण्डूकिका दृढाः श्लक्ष्णाश्च,खुरा वर्तुलाः पृथुलाश्च, पार्श्वावत्युन्नतौ दीर्घौ सुदृढौ समौ च,जठरमविलम्बि सुवृत्तं च, पृष्ठं समं नातिदीर्घं,किञ्चिद्विनतं च,कटिर्लीना सुवृत्ता च,पश्चाद्भागः पृथुः, पुच्छं तु मृदुस्निग्धदीर्घनालम्, वृषणौ समवृत्ता-वरोमशौ बिल्वमात्रौ च,मेहनं ह्रस्वं कृष्णवर्णरहितं, सक्थिनी ऋजिनी वृत्ते किञ्चिदानते च-एतानि शुभलक्षणानि।एतानि लक्षणानि बडबाया अपि तुल्यानि। तस्या योनिस्तु दीर्घा सुसंस्थिता ऋज्वी विशाला च प्रशस्ता।

अथोत्तममध्यमाधमाश्वानां क्रमेण प्रमाणानि-

मुखस्याङ्गुलानि द्वात्रिंशत्, त्रिंशत्,अष्टाविंशतिश्च।ग्रीवायाः षट्पञ्चाशत्, षट्चत्वारिंशत् षट्त्रिंशच्च।उरः पृष्ठं कटिश्च मुखतुल्यानि ज्ञेयानि।जङ्घाया द्वाविंशतिः, अष्टादश, चतुर्दश च।खुरस्य-सप्त,षट्, पञ्च।

उत्सेधस्तु-हस्ताश्चत्वारः, सार्धास्त्रयस्त्रयश्च।दैर्घ्यं तु हस्ताः पञ्च।चत्वारः सार्धास्त्रयः।खुराग्रात् पुच्छमूलपर्यन्तं तिर्यक्प्र माणं-खुरान्तात् ककुदपर्यन्तमूर्ध्वमानम्।

कर्णौ सप्ताङ्गुलौ।तालु षडङ्गुलं,जानु सूक्ष्मं, दण्डो विंशत्यङ्गुलश्च प्रशस्तानि।

वर्णलक्षणानि यथा-

श्वेतः कृष्णोऽरुणः पीत इति चत्वारः शुद्धवर्णाः।मिश्रास्तु

बहुविधाः। केशवालरोमचर्मखुरा यस्य श्वेतास्स शङ्खवर्णो ब्राह्मणजातिरित्युच्यते। पूर्वोक्तैः केशादिभिः शुक्लस्त्वचा कृष्णः कर्तल इत्युच्यते। केशादीनि सर्वाणि यस्य कृष्णवर्णानि स कृष्णः शूद्रजातिः। लोहितानि चेत् कञ्जाभः क्षत्रजातिः। सुवर्णाभानि चेत् शेराभो (?)वैश्यजातिः। रोमाणि श्वेतानि लोहितानि च मिश्राणि मुखपादवालकेशा रोहिता यस्य स स चौरः। शिरोवालपादमुखानि मेचकानि यस्य स रुरुः। श्वेतकृष्णरोमा श्वेतवर्णो नीलः। सितेतरनलकः पाटलीपुष्पवर्णः मधूकवल्कलवर्णो मेघः। पक्वजम्बूफलवर्णो जम्बुः। पीतकेशवालो रोहितवर्णो हरितः। उदुम्बरवर्णो रुचिरः। केसरपुष्पाणि जानुनी च मेचकानि यस्य स पीतसर्वाङ्गलोमा सुमनाः। सर्वश्वेतः श्यामैककर्णः श्यामकर्णः। सोऽश्व-मेधार्हः। मुखमध्यं चत्वारः पादाश्च यस्य स शुक्लानि स कल्याण-पञ्चकः। केशमुखपुच्छवक्षांसि पादाश्च यस्य शुक्लानि सोऽष्टमङ्गलः। मुखे चन्द्रकसहितः श्वेतपादो जम्बूफलवर्णो मल्लिकाक्षः। सर्वे वा पादा द्वौ वा पादौ वा श्वेता मुखे पुण्ड्रं च यस्य स धौतपादः। स्थाने स्थाने विशालश्वेतपट्टको येनकेनापि वर्णेन युक्तो हलाभः। चित्रपार्श्वः श्वेतबिन्दुकदम्बा येन केनापि वर्णेन करञ्जः। यस्य समन्तात् स्थूलसूक्ष्माः कृष्णबिन्दवः स श्वेतवर्णो बिम्बककः। येन केन वर्णेन वा युक्तोऽपि स्निग्धवर्णः स्निग्ध इत्युच्यते। स वर्णजनितदोषदूरः। सर्वश्वेतस्य यस्य चत्वारः पादा असिताः स त्याज्यः। पुच्छं शिरो वा यस्यान्यवर्णं स हीनवर्णस्त्याज्यः। भस्मवर्णो रक्तपुच्छो वा कृष्णनीलः केवलकृष्णो वा त्याज्यः। सर्वश्वेतः पूज्यः।

दुष्टाश्वा यथा-हीनदन्तोऽधिकदन्तः कराली कृष्णतालुरुत्तालु र्मुसली शृङ्गी चेत्येते सप्त स्वामिघातुकाः।व्याघ्राभस्तनी द्विखुरः ककुदि एकाण्डो जाताण्डश्चेत्येते महावाहाः।पञ्च सप्त वा दन्ता यस्य हीनाः स हीनदन्तः।यस्याधिकाः सोऽधिकदन्तः।यस्याधरदन्तैरूर्ध्व दन्ता श्छाद्यन्ते स कराली।कृष्णतालुरन्वर्थः।यस्योर्ध्वदन्तैरधरदन्ता श्च्छाद्यन्ते स उत्तालुः। श्वेतैकपादः पुष्पहीनो मुसली।यस्य कर्णदिशे नील आवर्तः स शृङ्गी। व्याघ्राभादयो द्विखुरान्ता अन्वर्थाः।ककुदावर्तः ककुदी।लम्बैकवृषण एकाण्डः। रोमशाण्डो जाताण्डः।

गतिलक्षणानि यथा-सिंहगजहंसमयूरशरभवृषभवानरगतयः प्रशस्ताः स्वामिनां वृद्धिप्रदाः।वक्र-विषम-स्खलितपरिगतविकट-संकीर्णगतयोऽप्रशस्ताः।

गन्धलक्षणानि यथा-स्वेदनेत्रमुखकर्णनासिकामूत्रपुरीषाणि सुगन्धीनि चेत् प्रशस्ताः।दुर्गन्धीनि चेदप्रशस्ताः। अर्जुनकदम्बकुटज घृतबिल्वक्षीरसमानगन्धाः सुगन्धाः।

स्वरलक्षणानि यथा-वीणावेणुमृदङ्गदुन्दुभिगजक्रौञ्चमेघसिंह व्याघ्रसमस्वराः शुभाः।विच्छिन्नाल्पगद्गदपरुषदर्दुरविस्वरावराहोष्ट्रादि समस्वराश्चाशुभाः।

सत्त्वलक्षणानि यथा-देवसत्त्वा उत्तमाः।राक्षसासुरपिशाचपितृ सर्पपक्षिसत्त्वा मध्यमाः।अशुचयः कलहासक्ता भीरवश्च हीन सत्त्वास्ते वर्ज्याः।

अथ च्छायालक्षणम्-ससूर्यमाकाशमिव मेघो यः सर्वलक्षण युक्तमश्वशरीरं व्याप्यावतिष्ठते कान्तिविशेषः स च्छाया। सा पञ्च विधा-पार्थिवी आग्नेयी वारुणी वायवी नाभसी चेति। तत्राद्या स्तिस्रः शुभाः। अन्ये द्वे अशुभे।

तत्र नानावर्णा स्थिरा नेत्रप्रिया स्निग्धा छाया पार्थिवी। सुवर्ण-विद्रुमाभा आग्नेयी। नीलमेघेन्दीवरनिर्मलोदकाभा वारुणी। चञ्चला परुषा वायवी। अल्पा—काशाभा नाभसी।

आवर्तलक्षणानि यथा-आवर्ता अष्टविधाः-आवर्तः शतपदी शुक्तिः,अवलीढः, पादुका,पादुकार्धं, संघातः,मुरुलं चेति।

जलावर्तसदृश आवर्तः-अङ्गुलत्रिभागप्रमाणः। शतपदीसमा शतपदी। अष्टाङ्गुला शुक्तिसमा शुक्तिः। सार्धत्र्यङ्गुला द्व्यङ्गुलेति केचित्। वत्सजिह्वाऽवलीढसदृशोऽवलीढः त्र्यङ्गुलः। पादुकाकारा पादुका चतुरङ्गुला। पादुकार्धाकारं पादुकार्धम्। हीनपादाङ्गुलपरिमितम्। मुकुला कारं मुकुलम्। अङ्गुलचतुर्भागः अनेकावर्तसमूहः संघातः-अष्टाङ्गुलम्।

स्थानच्युतो विवर्णो दुःस्थितस्तिर्यगायतो विन्यस्तो गूढश्छिन्नो हीनो महान् वामे दक्षिणाकृतिर्दक्षिणे वामाकृतिश्चाशुभाः। तत्र स्थानच्युतः स्वस्थानाद् भ्रष्टः। अन्यवर्णो विवर्णः। लक्ष्यालक्ष्यो दुःस्थितः। तिर्यग् जातस्तिर्यगायतः। विवर्णविषमस्थूलोल्बणवामदक्षिणचित्ररोमपुञ्जो विन्यस्तः। अलक्षितरोमगतिर्विमूढः। द्विधाच्छिन्न(न्नो?)रोमाच्छिन्नः। हीनमानो हीनः। अधिकमानो महान्।

तत्र दश ध्रुवा यथा-प्रपाने एकः। ललाट एकः। शिरसि

द्वौ। उरसि द्वौ। रन्ध्रयोर्द्वौ।एतेषु मध्ये येन केनापि हीनोऽश्वोऽशुभः।

आवर्तानामशुभस्थानानि यथा-प्रपानस्योपरिष्टा द्दक्षिणतः, अधरोष्ठे,चिबुके, प्रोते,घोणायां गण्डयोः,नासापुटयोः, अश्रुपातयोः,भ्रूमध्ये शङ्खयोः,कटयोः कूर्चे,कक्षयोः कलायां,मन्यायां, हन्वोः, स्कन्धयोः, कर्णाग्रे, विदौ(?)ग्रीवायां, गले,जत्रुणोः, वहे, ककुद्दे, काकसे,आसने, क्रोडे, अंसयोः,जाङ्गले,मन्दुरे,जानुनि,जङ्घायाम्, ईषिके,मूषिके, कुष्टिके पार्श्वशीर्षे,हृदये, अक्षे, शङ्खे,कुकुन्दरे, वंशे,ओष्ठे, नाकौ(भौ?), वृषणयोः,भासले चटके, पुच्छमूले,सेवन्यां,पायौ, कुक्षौ, सक्थ्नोः, वङ्क्षण योश्च स्थिता आवर्ता अशुभाः।

अथ शुभावर्ताः-ललाटे द्वारा(वा?)वर्तौ,शुक्ती वा प्रदक्षिणौ यमौ नाम त्रयः प्रदक्षिणास्त्रेताग्निर्नाम त्रयाणां पङ्क्तिरूर्ध्वगा निःश्रेणी नाम चत्वारश्चतुर्दिशं चेच्चतुरन्तो नाम।अपाङ्गस्थानयोर्मुकुलाकारौ द्वौ। स्तुवे एकः।कर्णमूलजौ वृषौ नाम।निगाले देवमणिर्नाम।कण्ठनाड्यां द्वौ चक्राकारौ।याभ्यामश्वश्चक्रकी नाम।कण्ठे रोचमानो नाम।केशान्तजे ग्रीवासहायते द्वे शुक्ती।वामे एका वा शुक्तिः।उरसि चतुर्दिशं चत्वारः।वक्षसि चत्वारः प्रदक्षिणावर्ताः।कण्ठे च रोचमानः श्रीवृक्षो नाम।यैरश्वः श्रीवृक्षकी नाम।वक्षसि तिस्रः शुक्तय ऊर्ध्वाः।बाह्वोः याभ्यामश्वोऽङ्गदी नाम।उपरन्ध्र-योरुपरिष्टात्।याभ्यामश्वो मौखली नाम।

श्रीवृक्षस्वस्तिकपद्मध्वजकलशगदाशङ्खचक्रधनुःखड्गनन्द्या वर्तार्धचन्द्रसकलचन्द्रार्धकलावर्धमानपताकावज्रमत्स्याङ्कुशव्यजनकवचभृङ्गार्वा

द्याकारा आवर्ता शुभाः।

अश्वानां वयःपरिमाणज्ञानं यथा-शुक्लैः षड्भिर्दन्तैरेकवर्षः शिशुः।ते कषायाश्चेद् द्विवर्षः।संदंशैस्त्रिवर्षः।मध्यदन्तैश्चतुर्वर्षः। अन्त दन्तैः पञ्चवर्षः।षष्ठवर्षप्रभृतिषु नवसु वर्षत्रिकेषु संदंशादिषु नवव्यञ्जनानि क्रमेण जायन्ते।तानि च -कालिका-हरिणिका,शुक्लः-काचः-माक्षिकः-शङ्खः-उलूखलम्-चलनं-पतनं चेति।अत्र कालिकादयः शङ्खपर्यन्ताः शुक्लपीतशुक्लकाचमाक्षिकशङ्खसदृशवर्णा एव। उलूखलवत् सगर्तत्वम्। चलनपतने प्रसद्धे एवेति।एवं द्वात्रिंशद्वर्षं वयः परिमाणम्।

अथाश्वानामायुःपरिमाणपरिज्ञानं यथा-

मनुष्याणां यथा करतले रेखाभिरायुर्ज्ञायते तथाऽश्वानां प्रोथ-रेखाभिर्ज्ञायते।प्रोथमध्ये यस्यैका ऊर्ध्वरेखा भवति तस्य प्रथमवर्षे मृतिः।तत्रैव द्वे अङ्गुलमाने रेखे यदि द्वितीये।तथाविधे द्वे तिर्यग्रेखे तृतीये।द्वे नते रेखे यदि चतुर्थे।वाम ऊर्ध्वरेखा नताग्रा चेत् पञ्चमे। द्व्यङ्गुलमानोर्ध्वरेखा चेत् षष्ठे।अर्धाङ्गुला मध्योन्नता चेत् सप्तमे। त्र्यङ्गुलमाना चेदष्टमे।मध्ये स्थूला ऋजुरेका रेखा चेन्नवमे।तादृश्यौ द्वे चेद्दशमे।द्व्यङ्गुला प्रोथमध्यगा दीर्घोर्ध्वरेखा चेदेकादशे।प्रोथोपरि स्थूला दीर्घा चेत् त्रयोदशे।काकपादवत् तिर्यगूर्ध्वे रेखे चेच्चतुर्दशे।काकपादवत् तिर्युगूर्ध्वे द्वे रेखे चेच्चतुर्दशे।द्वे रेखे चेत् पञ्चदशे।एका चेत् षोडशे।कृष्ण श्वेता द्विधा स्थिता चेत् सप्तदशे।यूपाकृतिश्चैत्याकृतिर्वा चेदष्टादशे।श्यावा चेत् प्रोथमध्य एकोनविंशे।

स्रुक्स्वस्तिकवर्धमानन्द्यावर्तश्रीवृक्षाकाररेखाश्चेत् त्रिंशद्वर्षायुः। चक्रवज्राकृतिश्चेदेकत्रिंशद् वर्षमर्धचन्द्राकारा सूर्याकारा वा चेद् द्वात्रिंशद् वर्षमायुः।

अथाश्वानां शुभाशुभचेष्टा यथा-

योऽश्वः प्रबुद्धः खुराग्रेण भूमिं विलिखन्नूर्ध्वमुखो हेषते स युद्धे स्वामिनो जयं शंसति।यस्तु सकृन्मूत्रं पुरीषमश्रु वा विमुञ्चति स पराभवम्।अकस्मान्निशान्ते यो हेषते स परचक्रागमसूचकः। पुलकाङ्कित-पुच्छोऽश्वस्वामिनः शुभयात्रां सूचयति।रात्रौ पुच्छान्ते यस्य स्फुलिङ्गा इव दृश्यन्ते स यात्रायां स्वामिनो नाशं ब्यनक्ति।वामपादेन भुवं खनन् दीनो यो हेषते स पराजयमावेदयति।दीनो भिन्नशकृन्मूत्र स्साश्रुनेत्रो यो ह्लेषते सोऽतीव पराजयम्।यो रुदितोन्मुख इव दीनं हेषते सोऽप्यशुभ-प्रदः। ग्रासप्रतिहतो मुखेन पांसून् शुष्कतृणं काष्ठं वा गृह्णन् यो हेषते सोऽतिभयं ब्यञ्जयति।वामपादेन भूमिं खनन् पृष्ठवालान् यो विकिरति स प्रवासं लक्षयति। दक्षिणपादेन चेत्तथा करोति स्वामिनो जयम्।

अथाश्वानां स्वस्थारिष्टं यथा-अश्वस्याकस्मान्नेत्रान्ते यदि नीले रेखे तदा मासद्वये तस्य मृत्युः।नीलपीतौ चेत् त्रिषु मासेषु बहुवर्णा रेखा चेत् पञ्चसु मासेषु अकस्माज्जिह्वायां बिन्दुर्जायते चेदकस्मिन् मासे मृतिः।पीतश्चेन्मासद्वये।रक्तश्चेन्मासत्रये। विचित्रश्चेन्मासचतुष्टये।नीलश्चेत् पञ्चसु मासेषु।बभ्रुश्चेत् षट्सु।पाटल श्चेत् सप्तसु। चणकाभष्टेदष्टसु।हरिद्राभश्चेन्नवसु। जतूपमश्चेन्नवसु।

हिमाभश्चेद् वत्सरे। यस्य श्वास उष्णः शरीरं च पुलकाञ्चितं जिह्वा च मलिना तस्य षट्सु मासेषु मृत्युः।जिह्वाग्रे पादान्ते उदरे च पिटका, मूत्रं च रक्तं यस्य तस्यापि तथा।पित्तग्रस्तस्य यस्य कर्णाभ्यां नेत्राभ्यां वा रक्तं प्रवर्तते तस्य दशसु मासेषु मृत्युः। वातपीडितस्य यस्य नेत्रे हरिद्राभे तस्य सप्तसु मासेषु। बहुवर्णे तु सप्तसु दिनेषु।यस्यैकं नेत्रं हीनं द्वितीयं च रक्तसदृशं पीतं वा तस्य मासे मृत्युः।

अश्वशालायां मधुमक्षिका यदि मधुकोशं बध्नन्ति तदाऽश्वानां नाश इति ज्ञेयम्।

अथाश्वानां देशभेदप्रयुक्तोत्तममध्यमाधमविभागो यथा-

ताजिकपारशीककोङ्कणतलान(?)सौराष्ट्रदेशोद्भवा उत्तमाः। उरोजातकीनाश-तुण्डभरद्दजाद्दज(?)सैन्धवस्थलजातदेशोद्भवा मध्याः। शामलभार्जलसारस्वतटङ्कण-प्राग्दक्षिणदेशोद्भवा अधमाः।

अश्वारोहणविज्ञानं यथा-अश्वतत्त्वज्ञो दृढासनस्सत्त्वबलोत्तरः स्थाने दण्डनिपातकश्चलकिसलयपादः कर्णमध्यनिहितदृष्टिः स्वासने निश्चल-कटिप्रदेशो यस्तस्य सोऽश्वारोहणे योग्यः। तस्येच्छामनुसृत्याश्वो धावति।स्थूलः क्रोधन मूर्खो भीतश्चलासनो[ऽ]स्थानदण्डपाती च यः सोऽधमः।तस्याश्वो न धावति।तत्र ब्राह्मणजातिमश्वं भक्तिदानेन, क्षत्रियजातिं सौम्यैन वैश्यजातिं वाग्दण्डेन, शूद्रजातिं दण्डेन च वाहयेत्।

हेषितस्खलितभीत्युन्मार्गगमनकोपचित्तभ्रमा दण्डपातावसराः। तत्र हेषिते स्कन्धो दण्डस्थानम्। स्खलिते जघनान्तरं, भीते वक्षः, उन्मार्गगमने मुखं, कोपे पुच्छं, चित्तविभ्रमे जानुद्वयान्तरालं। अस्थानताडनं यावज्जीवं दोषहेतुः।

अवाहने अत्यन्तवाहने च दोषः।

अश्वानां गतिविशेषा धाराः। ताः पञ्च। आस्कन्दितं, धौरितं, रेचितं, वल्गितं, प्लुतं चेति। मतान्तरे तु विक्रमा पुलकी, पूर्णकण्ठी, त्वरिता ताडिता चेति पञ्च। षष्ठी निरालम्बा चेति वदन्ति।

तत्र समचतुष्पादगतिरास्कन्दितम्। शुकमयूरवराहनकुलसमा गतिर्धौरितम्। अवक्रशीघ्रगमनं रेचितम्। उत्पतनसहिता गतिर्वल्गितम्। पक्षिमृगसदृशोत्पतना गतिः प्लुतम्।

अश्वानां गतिविशेषेणोत्तमादिविभागो यथा-नेत्रयोरष्टा निमेषा मात्रा। मात्रा षोडशकेन यो धनुःशतं धावति सोऽश्व उत्तमः। मात्रा-विंशत्यायः स मध्यमः। अन्योऽधमः।

अश्वानां दुष्टरक्तमोक्षणविधिर्यथा-दुष्टरक्तमोक्षणद्वारा ण्यष्टौ। कण्ठः, कक्षौ, नेत्रे, अंसौ, मुखं, अण्डौ, पादौ, पार्श्वे चेति।

अन्ये तु सप्तदशाहुः। गुल्फः कण्ठे मेढ्रः, कक्षान्तौ, पत्रकं, गुदं, पुच्छं, वस्तिः, पार्श्वे, सर्वसन्धयः, जिह्वा, अधरोष्ठः, नेत्रं, कर्णमूलं, कटिः, गण्डः।

मोक्षणीयरक्तप्रमाणं तु मुखे पलशतम्। कक्षयोरेवम्। नेत्रयोः

पञ्चाशत् पलम्।मेढ्रादेवम्।गण्डयोरण्डयोश्च पञ्चविंशतिः पलानि।गुदे द्वादश पलानि।तत्र पैत्तिकं रक्तं कालवर्णम्।वातिकं तु फेनिलम्।श्लेष्मलं तु पिच्छिलं, पाण्डुकषायोदकवच्च भवति।

अश्वानामृतुचुर्या यथा-वर्षाकाले अश्वानां वाहनं न कार्यम्।तत्र कूपोदकं कटु तैलं निवातगृहं दिवसे दिवसे पलार्धं लवणम्।अन्यथा रोगसंभवः।

शरत्काले तु गुडं घृतं,क्षीरमष्टपलप्रमाणा शर्करा सरोजलवासं घृत-युत-नीलं(?) अकुष्टक(?)भोजनं च प्रशस्तम्।

हेमन्तकाले निर्वाते स्थितिः।घृततैलमाषाः, यथेच्छं क्षीरं, शनैः शनैर्वाहनं, पक्वयवभोजनं च शस्तानि।

शिशिरकाले तु कटुतैलं पलाष्टकं सप्तदिनपर्यन्तं पाययेत्।तदनु प्रातर्यवान् यवयवसांश्च भोजयेत्।

वसन्तकाले तु यथेच्छं वाहयेद् घृतं तैलं लवणं च दद्यात्।

ग्रीष्मे तु घृतं रक्तमोक्षणम्।घर्मशान्तिः।छायाबन्धनं, मर्दनं शीतोदकसेवा।दूर्वा लघुकोमलं तृणान्तरं च ।

अश्वरोगशान्तिकर्म यथा-

आदित्यवासरे संक्रान्तावयने विषुवद्द्वये दिनक्षये व्यतीपाते द्वादश्यामश्विनीनक्षत्रे वा ईशानदिशि अष्टहस्तप्रमाणं चतुर्हस्तप्रमाणं वा मण्डपं चतुर्द्वारं वितानस्रक्तोरणाद्यलंकृतं कृत्वा तन्मध्ये वेदिकां कुर्यात्।

मण्डपस्य बहिः प्राच्यां पञ्चविंशतिहस्तदूरे कुण्डं विधाय स्वस्तिवाचन-पूर्वकमाचार्यादीन् वरयित्वा तन्मण्डपवेदिकामध्ये तण्डुलोपरि रेवन्तं ध्यानपूर्वकं मन्त्रेण पूजयेत्।

“‘सूर्यपुत्रं हयारूढं पञ्चवक्त्रं दशाम्बकम्। रक्तवर्णं खड्गकरं रेवन्तं द्विभुजं स्मरेत्। सूर्यपुत्र नमस्तेऽस्तु नमस्ते पञ्चवक्त्रक। नमो गन्धर्वदेवाय रेवन्ताय नमो नमः।।” इति पूजामन्त्रः।

तं परितो लोकपालांश्च स्वस्वमन्त्रैः पूजयेत्। द्वारेषु ऋग्वेदादींश्चतुरो वेदान् जपेयुः। द्वारेषु च रक्तवर्णान् रक्तवस्त्राद्य लङ्कृतान् पञ्चत्वक्पल्लवपञ्चामृतसहितान् स्थापयित्वा ऽऽपोहिष्ठेत्या दिभि रब्लिङ्गैर्मन्त्रैः पूजां कारयेत्। रेवन्तपूजानन्तरमाचार्यः पूर्वोक्तकुण्डे व्याहृतिभिरग्निं प्रतिष्ठाप्याज्यभागान्तं कृत्वा अग्नये स्वाहेति घृताहुतिं कृत्वा रेवन्तपूजामन्त्रेणाद्यन्तप्रणवसहितेन पालाशसमिद्भिर्घृतेनान्नेन च प्रत्येकमष्टोत्तरशतमाहुतीः कारयेत्। आचार्यो व्याहृतिभिर्व्रीहितिलान् जुहुयात्। नवरात्रं त्रिरात्रमेकरात्रं वा एकभक्तो नियतेन्द्रियोऽनेन विधिना कुर्यात्। अन्ते जयादिहोमपूर्विकां पूर्णाहुतिं कुर्यात्। ततस्तद्व्रत शेषेण कुम्भोदकेनाश्वान् प्रदक्षिणीकुर्वन्तो व्रजन्तो जपन्तो जीमूतस्येति चतुरोऽनुवाकान् चतसृषु दिक्षु विक्षिपेयुः। तत आचार्याय निष्कपञ्चकं दक्षिणां दद्यात्। तदर्दं तदर्धं तदर्धं वा यथाशक्ति ब्रह्मणे जापकेभ्यश्च दद्यात्। ततः शान्तिवाचनपूर्वकं ब्राह्मणान् भोजयेत्।

अश्वानामष्टौ लक्षणानि द्रष्टव्यानि। शरीरं, वर्णः, गन्धः, स्वरः, सत्त्वं, छाया, गतिः, आवर्तश्चेति।

गन्धलक्षणानि यथा-स्वेदनेत्रमुखकर्णनासिकामूत्रपुरीषाणि सुगन्धीनि चेत् प्रशस्ताः। दुर्गन्धीनि चेदप्रशस्ताः। अर्जुनकदम्बकुटज घृतबिल्वक्षीरसमानगन्धाः सुगन्धाः।

स्वरलक्षणानि यथा-वीणावेणुमृदङ्गदुन्दुभिगजक्रौञ्च मेघसिंह व्याघ्रसमस्वराः शुभाः। विच्छिन्नाल्पगद्गदपरुषदर्दुरविस्वरा वराहोष्ट्रादि समस्वराश्चाशुभाः।

सत्त्वलक्षणानि यथा-देवसत्त्वा उत्तमाः। राक्षसासुरपिशाच पितृसर्पपक्षिसत्त्वा मध्यमाः। अशुचयः कलहासक्ता भीरवश्च हीन सत्त्वास्ते वर्ज्याः।

अथ च्छायालक्षणम्-ससूर्यमाकाशमिव मेघो यः सर्वलक्षणयुक्त मश्वशरीरं व्याप्यावतिष्ठते कान्तिविशेषः स च्छाया। सा पञ्चविधा- पार्थिवी आग्नेयी वारुणी वायवी नाभसी चेति। तत्राद्या स्तिस्रः शुभाः। अन्ये द्वे अशुभे।

तत्र नानावर्णा स्थिरा नेत्रप्रिया स्निग्धा छाया पार्थिवी। सुवर्णविद्रुमाभा आग्नेयी। नीलमेघेन्दीवरनिर्मलोदकाभा वारुणी। चञ्चला परुषा वायवी। अल्पाकाशाभा नाभसी।

आवर्तलक्षणानि यथा-आवर्ता अष्टविधाः-आवर्तः शतपदी शुक्तिः,अवलीढः, पादुका,पादुकार्धं, संघातः,मुरुलं चेति।

जलावर्तसदृश आवर्तः-अङ्गुलत्रिभागप्रमाणः। शतपदीसमा शतपदी। अष्टाङ्गुला शुक्तिसमा शुक्तिः। सार्धत्र्यङ्गुला द्व्यङ्गुलेति

केचित्। वत्सजिह्वाऽवलीढसदृशोऽवलीढः त्र्यङ्गुलः। पादुकाकारा पादुका चतुरङ्गुला। पादुकार्धाकारं पादुकार्धम्। हीनपादाङ्गुलपरिमितम्। मुकुलाकारं मुकुलम्। अङ्गुलचतुर्भागः अनेकावर्तसमूहः संघातः-अष्टाङ्गुलम्।

स्थानच्युतो विवर्णो दुःस्थितस्तिर्यगायतो विन्यस्तो गूढश्छिन्नो हीनो महान् वामे दक्षिणाकृतिर्दक्षिणे वामाकृतिश्चाशुभाः। तत्र स्थानच्युतः स्वस्थानाद् भ्रष्टः। अन्यवर्णो विवर्णः। लक्ष्यालक्ष्यो दुःस्थितः। तिर्यग् जातस्तिर्यगायतः। विवर्णविषमस्थूलोल्बणवाम-दक्षिणचित्ररोमपुञ्जो विन्यस्तः। अलक्षितरोमगतिर्विमूढः। द्विधाच्छिन्न(न्नो?)रोमाच्छिन्नः। हीनमानो हीनः। अधिकमानो महान्।

तत्र दश ध्रुवा यथा-प्रपाने एकः। ललाट एकः। शिरसि द्वौ। उरसि द्वौ। रन्ध्रयोर्द्वौ। एतेषु मध्ये येन केनापि हीनोऽश्वोऽशुभः।

आवर्तानामशुभस्थानानि यथा-प्रपानस्योपरिष्टाद्दक्षिणतः, अधरोष्ठे, चिबुके, प्रोते, घोणायां, गण्डयोः, नासापुटयोः, अश्रुपातयोः, भ्रूमध्ये, शङ्खयोः, कटयोः, कूर्चे, कक्षयोः, कलायां, मन्यायां, हन्वोः, स्कन्धयोः, कर्णाग्रे, विदौ(?), ग्रीवायां, गले, जत्रुणोः, वहे, ककुदे, काकसे, आसने, क्रोडे, अंसयोः, जाङ्गले, मन्दुरे, जानुनि, जङ्घायाम्, ईषिके, मूषिके, कुष्टिके, पार्श्वशीर्षे, हृदये, अक्षे, शङ्खे, कुकुन्दरे, वंशे, ओष्ठे, नाकौ(भौ?), वृषणयोः, भाले, चटके, पुच्छमूले, सेवन्यां, पायौ, कुक्षौ, सक्थ्नोः, वङ्क्षणयोश्च स्थिता आवर्ता अशुभाः।

अथ शुभावर्ताः-ललाटे द्वारा(वा?)वर्तौ, शुक्ती वा प्रदक्षिणौ

यमौ नाम त्रयः प्रदक्षिणास्त्रेताग्निर्नाम त्रयाणां पङ्क्तिरूर्ध्वगा निःश्रेणी नाम चत्वारश्चतुर्दिशं चेच्चतुरन्तो नाम। अपाङ्गस्थानयोर्मुकुलाकारौ द्वौ। स्तुवे एकः। कर्णमूलजौ वृषौ नाम। निगाले देवमणिर्नाम। कण्ठनाड्यां द्वौ चक्राकारौ। याभ्यामश्वश्चक्रकी नाम। कण्ठे रोचमानो नाम। केशान्तजे ग्रीवासहायते द्वे शुक्ती। वामे एका वा शुक्तिः। उरसि चतुर्दिशं चत्वारः। वक्षसि चत्वारः प्रदक्षिणावर्ताः। कण्ठे च रोचमानः श्रीवृक्षो नाम। यैरश्वः श्रीवृक्षकी नाम। वक्षसि तिस्रः शुक्तय ऊर्ध्वाः। बाह्वोः याभ्यामश्वोऽङ्गदी नाम। उपरन्ध्रयोरुपरिष्टात्। याभ्यामश्वो मोखली नाम।

अश्वशरीरज्वलनाद्युत्पातशान्तिर्यथातमश्वं सर्पिषाऽभ्यज्य गौरसर्षपैः प्रोक्षयेत्। पलाशसमिद्भिर्मधुघृतपायसैश्चाग्निवायुवरुणदेवतैर्मन्त्रैः शालायां जुहुयात्। एवं सप्तरात्रं कुर्यात्-घोराणि शाम्यन्ति।

अश्वो दिवा जायते चेत् स्वामिनोऽशुभं भवति। तदर्थं शान्तिकर्म यथा-निष्केन तदर्धेन तदर्धेन वा सुवर्णेन रेवन्तप्रतिमां कारयेत्। रक्तोर्ध्व-केशं पिङ्गाक्षमुग्रदंष्ट्रमेकेन हस्तेन कशां धारयन्तं रेवन्तं पूजयेत्। आचार्यमृत्विजश्च वरयित्वा तैः पूजयेत्। प्रस्थद्वयसंमिते शालितण्डुलेऽष्टदलपद्मे पूजयेत्।

‘‘सूर्यपुत्र महातेजो हयाधीश महाबल। अर्घ्यं गृहाण रेवन्त सुप्रीतवरदो भव।’’ इत्यर्घ्यमन्त्रः। षोडशभिरुपचारैस्तं पूजयित्वा ततो नवग्रहान् लोकपालान् विनायकं स्वस्वमन्त्रैः पूजयेत्। पञ्चत्वक्पल्लव-पञ्चामृतपञ्चगव्यपञ्चरत्नसहितं बृहत्कलशं वरुणमन्त्रेण पूजयेत्।

सौरमृत्युञ्जयग्रहजपांश्च कारयेत्। पलाशखदिराश्वत्थसमिद्भिः सौर मन्त्रेण होमं कारयेत्। ततश्चरुणा पायसेनाज्येन च कारयेत्। ग्रहाणां स्वसमिद्भिर्होमं कारयेत्। मधुसंयुक्तांस्तिलान् व्याहृतिभिर्हावयेत्(?)। ततः संपूर्णाहुत्यनन्तरं यजमानाभिषेकः कार्यः। नीराजनं कुर्यात्। दिक्षु बलिं च दद्यात्। यजमान आज्यावलोकनं च कुर्यात्। जातं किशोरं च त्यजेत्। आचार्याय ऋत्विग्भ्यश्च दक्षिणां दत्वा ब्राह्मणान् भोजयेत्।

स्वप्ने अश्वारोहणं राज्यफलकम्। एकाकिनोऽश्वयुक्तरथारोहण-मैश्वर्यफलकम्। अश्वदर्शनमात्रं तु शोकफलकम्।

यात्रायामश्वदर्शनं शुभनिमित्तम्।

अश्वक्षीरादिगुणा यथा-अश्वक्षीरं साम्ललवणं श्लेष्मवात हरम्। तन्मांसं मधुरकषायम्। वातपित्तहरम्। वृष्यं रुच्यं गुरु बृंहणं श्लेष्मकरं च। ग्रहणीक्षयार्शोहरं च।

वेदे व्यापकः[१]।

अश्वकर्मयोग्यकालो यथा-पुनर्वसुपुष्यधनिष्ठाशततारका रोहिण्युत्तरात्रयाश्विन्यनुराधारेवतीमृगशीर्षस्वातीहस्तान्यतमनक्षत्रमादित्य भौमबुधगुरुशुक्रवासराः गुरुशुक्रयुतं लग्नं चन्द्रे लग्नाद् द्वितीयचतुर्थसप्तम स्थिते सत्यश्वानां क्रयविक्रयादिकं कर्म कार्यम्। योग्यनक्षत्रे ष्वपि सूर्यनक्षत्रात्

१."-'अश्व'-इति शब्दस्य 'व्यापक' इत्यर्थो वेदे"इत्यर्थः। एतदनन्तरमत्र 'अश्वजातिपुरुषः','अश्वजातिस्त्री'ति शब्दद्वयं प्रवेशितं कामशास्त्रानुसारेण तद्विवरणमपि पञ्च-विंशतिपङ्क्तिदघ्नं दत्तम्। प्रकृतासंबद्धत्वात् तदत्र न योजितम्।

पञ्चदशमितेषु पश्चादुत्क्रमतस्त्रिषु नक्षत्रेषु तत् प्रशस्तम्।गणनायाम् अभिजिद् योजनीयः।

विशिष्य च कृतान्नचणकक्षीरतृणमुद्गादिभक्षणे अन्नप्राशनवत्। क्षुरकर्मादिषु चौलवत्। भेषजे भेषजवत्।अश्वानां मैथुने गर्भाधानवत्। अश्वशालाविधौ गृहनिर्माणवत्।शिक्षारम्भे विद्यारम्भवत्।भूषणे भूषणवत्-इत्येवं मनुष्याणामिव योग्यकालो ज्ञातव्यः।चर्मकर्मादिकं जययोगे शुभलग्ने कार्यम्।

अश्वक-(अश्व-क)पु.अज्ञातोऽश्वः।कुत्सितोऽश्वः।(अश्व-कन्)अश्व इव प्रतिकृतिः-अश्वसदृशः कश्चित्।

अश्वगोष्ठ-(अश्व-गोष्ठच्)न.अश्वस्थानम्।

अश्वचर्या-स्त्री.अश्वारोहणादिक्रिया।

अश्वतर-(अश्व-ष्टरच्)पु.[असुरविशेषः।काद्रवेयविशेषः। फाल्गुन-मासे सूर्यरथस्थो नागविशेषः।पशुजातिविशेषः] प्रसहमृगान्तर्गतः खर-जातिः।तत्पर्यायाः-गोखर-वेगसर(आन्ध्र)वेसडमु-तदुत्पत्तिरश्व गर्दभ-जातिसंकरात्। गर्दभेनाश्वायामुत्पादितोऽश्वतर इति प्रसिद्धिः।

अश्वतरशब्दात् तमाचष्ट इत्याद्यर्थे णिच्।णिङिति केचित्। तदा तरशब्दलोपश्च भवति।ततोऽश्वीति धातुर्भवति।

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

# ग्रन्थऋणम्


१.अग्निपुराणम्-सं.बलदेव उपाध्यायः।प्र.चौखाम्बाप्रकाशनम्, वारणासी।१९६६

२. गरुडपुराणम्-जीवानन्दविद्यासागरः।प्र.सरस्वतीयन्त्रालयः। कोल्कता-१८९०

३.विष्णुधर्मोत्तरपुराणम्-संपादकः कन्नडानुवादकश्च-संकीघट्टं वेङ्कटाचार्यः। जयजामराजेन्द्रग्रन्थामाला १९४५,१९५३

४.बृहत्संहिता-संपादकः, इङ्ग्लीष्भाषानुवादकश्च-वि.सुब्रह्मण्य शास्त्री एम्.रामकृष्णभट्टश्च।प्र.सुब्बय्य एण्ड् सन्स्

५.शार्ङ्गधरपद्धतिः-शार्ङ्गधरः।सं-पीटर्सन्।प्र.डैरेक्टर्आफ् पब्लिक् इन्स्ट्रक्षन्। मुम्बयी १८८८

६.(राज)मानसोल्लासः-कन्नडानुवादः, द्वयोः संपुटयोः।अनेके विद्वांसोऽनेका विदुष्यश्च।प्र.कर्णाटकविश्वविद्यानिलयः, धारवाड १९९६

७.साम्राज्यलक्ष्मीपीठिका-सं.श्री के.वासुदेवशास्त्री, के.एस्. सुब्रह्मण्यशास्त्री च।सरस्वतीमहल् लैब्ररी, तञ्जावूरु-१९५२

८.हंसविलासः-हंसमिट्ठु।सं.स्वामि त्रिविक्रमतीर्थो महामहोपाध्यायः हातिभायि-शास्त्री च।गायकवाड ओरियण्टल् रीसर्च् इन्स्टिट्यूट्, बरोडा-१९५७

१०.श्रीतत्त्वनिधिः-मुम्मडि कृष्णराज ओडेयर्विरचितः। सकन्नडे ङ्ग्लीषनुवादः।संपुटत्रयम्।सं.डा.एच्.पि.देवकी।इङ्ग्लीष् अनुवादः-(सर्वेषां संपुटानां)विद्वान् एच्.वि.नागराजराव्।कन्नडानुवादः-(प्रथमस्य संपुटस्य)विद्वान् दि.एच्.एस्.फाटक्।(इतरेषां संपुटानाम्) डा.विद्वान्. टि.वि.सत्यनारायणः।

प्राच्यविद्यासंशोधनालयः। मैसूरु। शक्तिनिधिः-१९९७.विष्णुनिधिः-२००२.शिवनिधिः-२००४.

११.शब्दकल्पद्रुमः-राजा राधाकान्तदेवः।मोतीलाल् बनारसीदास्, नवदिल्ली- १९६१

१२.वाचस्पत्यम्-तारानाथतर्कवाचस्पतिः।चौखाम्बा संस्कृतसीरीस् आफीस्, वारणासी-१९६२(पुनर्मुद्रितं संस्करणम्)

१३.लघुशब्दार्थसर्वस्वम्।परवस्तु वेङ्कटरङ्गाचार्यः। तेलुगुलिपिः। आर्षमुद्रणालयः, विशाखपत्तनम्।प्रथमः संपुटः १८७७, द्वितीयः संपुटः १८७८

१४.अत्रिनिर्वचनम्-सं।महामहोपाध्यय मथुराप्रसाददीक्षितः। प्र.संपूर्णानन्द-संस्कृतविश्वविद्यानिलयः-वाराणसी-१९६१

१५. केळदिराजवंशतरङ्गिणि-सकन्नडानुवादा।सं.विद्वान् एम्.एस्. बसवराजय्यः।गुरुकुलप्रकाशनम्।जगद्गुरुपट्टदकरिबसवेन्द्रग्रन्थमाला। श्रीसिद्ध हळ्ळि संस्थानम्, श्रीमठः, श्रीवीरशैवगुरुकुलानन्दाश्रमः, कृष्णराजेन्द्रबडावणे, तिपटूरु-५७२२०२.२००५

१६. अर्थशास्त्रम्-कौटिल्यप्रणीतम्।सं एन् एस्.वेङ्कटनाथाचार्यः।चतुर्थं संस्करणम्।प्राच्यविद्यासंशोधनालयः।मैसूरु-1960

१७. नाट्यशास्त्रम्-भरतप्रणीतम्।सं.केदारनाथः।द्वितीयं संस्करणम्।निर्णयसागरप्रकाशनम्।मुम्बयी 1943

१८. युक्तिकल्पतरुः-भोजप्रणीतः।सं.ईश्वरचन्द्रशास्त्री।प्रथमं संस्करणम्।सिद्धेश्वरमेषिन् यन्त्रः।कल्कत्ता 1917

१९. सरस्वतीकण्ठाभरण् एक् समीक्षात्मक् अध्ययन्ः डा.विश्वनाथ् गो शास्त्री।परिमल् पब्लिकेषन्स्।दिल्ली।1996

२०. शृङ्गारप्रकाशः-भोजप्रणीतः-सं.रेवाप्रसाद् द्विवेदी। प्र.इन्दिरा गाँधीराष्ट्रीयकलाकेन्द्रं नयी दिल्ली।

२१. कन्नडविषयविश्वकोश। प्रधानसंपादकः-हा.मा.नायक्। कन्नड अध्ययन संस्थे-मैसूरु विश्वविद्यानिलयः 1979

२२. *Indian Lexicography* by Claus Vogel.P.364 ( *A History of Indian Literature* Vol. 5 Part. II ed. by Jan Gonda) Otto Harrassowitz Wiesbaden 1979

२३. *Subhāṣita, Gnomic and Didactic Literature* by Ludwik Sternbach ( *A History of Indian Literature* Vol.4. Part I. ed. by Jan Gonda) Otto Harrassowitz Wiesbaden 1974

२४.*Discovery of genuine Āgneyapurāṇa.* by Dr.R.C.Hazra . Journal of the Oriental Research Institute M.S.University of Baroda,Baroda.V.3.March 1956 Page 411



## संस्कृतवाङ्मये विश्वकोशाः

संस्कृतवाङ्मये विश्वेषां विचाराणां भूयसी समृद्धिरस्ति, यामधिकृत्य संशोधनं कृतवन्तः कुर्वन्तश्च विद्वांसो भाग्यवशादनेके। एतस्याः समृद्ध्याः क्रमिकं संपुञ्जनमपि केषुचन कोषस्वरूपेषु ग्रन्थेषु स्फुटमेव दृश्यते यत्र निहितदृश्वानो विपश्चितः स्वसंशोधन फलं प्रबन्धैर्ग्रन्थैश्च प्रदिदर्शयिषन्त इति प्रसिद्धमेतत्। समादत्तविश्वकोशत्वरूपधर्माणां सांस्कृतानां ग्रन्थानामेताव त्पर्यन्तमध्ययनविषयीभूतानां तदितरेषां च त्रिचतुराणां संक्षेपेण परिचायनमस्या लघ्व्याः कृतेः प्रयोजनम्।

### अत्रैते विषयाः सन्ति



**एस्.जगन्नाथः**